एवम् उक्तस् तु शक्रेण नारदः प्रत्यभाषत ।
शृणु मे मघवन् येन न दृश्यन्ते महीक्षितः ॥१९॥
विदर्भराज्ञो दुहिता दमयन्तीति विश्रुता ।
रूपेण समतिक्रान्ता पृथिव्यां सर्वयोषितः ॥२०॥
5 तस्याः स्वयंवरः शक्र भविता नचिराद् इव ।
तत्र गच्छन्ति राजानो राजपुत्राश् च सर्वशः ॥ २१ ॥
तां रत्नभूतां लोकस्य प्रार्थयन्तो महीक्षितः ।
काङ्क्षन्ति स्म विशेषेण वलवृत्रनिषूदन ॥ २२ ॥
एतस्मिन् कथ्यमाने तु लोकपालाश् च साग्निकाः ।
10 आजग्मुर् देवराजस्य समीपम् अमरोत्तमाः ॥ २३ ॥
ततस् ते शुश्रुवुः सर्वे नारदस्य वचो महत् ।
श्रुत्वैव चाब्रुवन् हृष्टा गच्छामो वयम् अप्य् उत ॥ २४ ॥
ततः सर्वे महाराज सगणाः सहवाहनाः ।
विदर्भान् अभिजग्मुस् ते यतः सर्वे महीक्षितः ॥ २५ ॥
15 नलो ऽपि राजा कौन्तेय श्रुत्वा राज्ञां समागमम् ।
अभ्यगच्छद् अदीनात्मा दमयन्तीम् अनुव्रतः ॥ २६ ॥
अथ देवाः पथि नलं ददृशुर् भूतले स्थितम् ।
साक्षाद् इव स्थितं मूर्त्या मन्मथं रूपसंपदा ॥ २७ ॥
तं दृष्ट्वा लोकपालास् ते भ्राजमानं यथा रविम् ।
20 तस्थुर् विगतसंकल्पा विस्मिता रूपसंपदा ॥ २८ ॥
ततो ऽन्तरिक्षे विष्टभ्य विमानानि दिवौकसः ।
अब्रुवन् नैषधं राजन्न् अवतीर्य नभस्तलात् ॥ २९ ॥
भो भो नैषध राजेन्द्र नल सत्यव्रतो भवान् ।

अस्माकं कुरु साहाय्यं दूतो भव नरोत्तम ॥ ३० ॥

॥ इति नलोपाख्याने द्वितीयः सर्गः ॥ २ ॥

---

बृहदश्व उवाच ।

तेभ्यः प्रतिज्ञाय नलः करिष्य इति भारत ।
5 अथैतान् परिपप्रच्छ कृताञ्जलिर् उपस्थितः ॥ १ ॥
के वै भवन्तः कश् चासौ यस्याहं दूत ईप्सितः ।
किं च तद् वो मया कार्यं कथयध्वं यथातथम् ॥ २ ॥
एवम् उक्ते नैषधेन मघवान् अभ्यभाषत ।
अमरान् वै निबोधास्मान् दमयन्त्यर्थम् आगतान् ॥ ३ ॥
10 अहम् इन्द्रो ऽयम् अग्निश् च तथैवायम् अपां पतिः ।
शरीरान्तकरो नृणां यमो ऽयम् अपि पार्थिव ॥ ४ ॥
त्वं वै समागतान् अस्मान् दमयन्त्यै निवेदय ।
लोकपाला महेन्द्राद्याः समायान्ति दिदृक्षवः ॥ ५ ॥
प्राप्तुम् इच्छन्ति देवास् त्वां शक्रो ऽग्निर् वरुणो यमः ।
15 तेषाम् अन्यतमं देवं पतित्वे वरयस्व ह ॥ ६ ॥
एवम् उक्तः स शक्रेण नलः प्राञ्जलिर् अब्रवीत् ।
एकार्थं समुपेतं मां न प्रेषयितुम् अर्हथ ॥ ७ ॥
कथं नु जातसंकल्पः स्त्रियम् उत्सहते पुमान् ।
परार्थम् ईदृशं वक्तुं तत् क्षमन्तु महेश्वराः ॥ ८ ॥

20 देवा ऊचुः ।

करिष्य इति संश्रुत्य पूर्वम् अस्मासु नैषध ।

न करिष्यसि कस्मात् त्वं व्रज नैषध माचिरम् ॥ ९ ॥

बृहदश्व उवाच ।

एवम् उक्तः स देवैस् तैर् नैषधः पुनर् अब्रवीत् ।
सुरक्षितानि वेश्मानि प्रवेष्टुं कथम् उत्सहे ॥ १० ॥
5 प्रवेक्ष्यसीति तं शक्रः पुनर् एवाभ्यभाषत ।
जगाम स तथेत्य् उक्त्वा दमयन्त्या निवेशनम् ॥ ११ ॥
ददर्श तत्र वैदर्भीं सखीगणसमावृताम् ।
देदीप्यमानां वपुषा श्रिया च वरवर्णिनीम् ॥ १२ ॥
अतीव सुकुमाराङ्गीं तनुमध्यां सुलोचनाम् ।
10 आक्षिपन्तीम् इव प्रभां शशिनः स्वेन तेजसा ॥ १३ ॥
तस्य दृष्ट्वैव ववृधे कामस् तां चारुहासिनीम् ।
सत्यं चिकीर्षमाणस् तु धारयामास हृच्छयम् ॥ १४ ॥
ततस् ता नैषधं दृष्ट्वा संभ्रान्ताः परमाङ्गनाः ।
आसनेभ्यः समुत्पेतुस् तेजसा तस्य धर्षिताः ॥ १५ ॥
15 प्रशशंसुश् च सुप्रीता नलं ता विस्मयान्विताः ।
न चैनम् अभ्यभाषन्त मनोभिस् त्व् अभ्यपूजयन् ॥ १६ ॥
अहो रूपम् अहो कान्तिर् अहो धैर्यं महात्मनः ।
को ऽयं देवो ऽथ वा यक्षो गन्धर्वो वा भविष्यति ॥ १७ ॥
न तास् तं शक्नुवन्ति स्म व्याहर्तुम् अपि किं चन ।
20 तेजसा धर्षितास् तस्य लज्जावत्यो वराङ्गनाः ॥ १८ ॥
अथैनं स्मयमानं तु स्मितपूर्वाभिभाषिणी ।
दमयन्ती नलं वीरम् अभ्यभाषत विस्मिता ॥ १९ ॥
कस् त्वं सर्वानवद्याङ्ग मम हृच्छयवर्धन ।

प्राप्तो ऽस्य् अमरवद् वीर ज्ञातुम् इच्छामि ते ऽनघ ॥२०॥
कथम् आगमनं चेह कथं चासि न लक्षितः ।
सुरक्षितं हि मे वेश्म राजा चैवोग्रशासनः ॥२१॥
एवम् उक्तस् तु वैदर्भ्या नलस् तां प्रत्युवाच ह ।
5 नलं मां विद्धि कल्याणि देवदूतम् इहागतम् ॥२२॥
देवास् त्वां प्राप्तुम् इच्छन्ति शक्रो ऽग्निर् वरुणो यमः ।
तेषाम् अन्यतमं देवं पतिं वरय शोभने ॥२३॥
तेषाम् एव प्रभावेन प्रविष्टो ऽहम् अलक्षितः ।
प्रविशन्तं न मां कश् चिद् अपश्यन् नाप्य् अवारयत् ॥२४॥
10 एतदर्थम् अहं भद्रे प्रेषितः सुरसत्तमैः ।
एतच् छ्रुत्वा शुभे बुद्धिं प्रकुरुष्व यथेच्छसि ॥२५॥

॥ इति नलोपाख्याने तृतीयः सर्गः ॥३॥

---

बृहदश्व उवाच ।
सा नमस्कृत्य देवेभ्यः प्रहस्य नलमब्रवीत् ।
15 प्रणयस्व यथाश्रद्धं राजन्किं करवाणि ते ॥१॥
अहं चैव हि यच्चान्यन्ममास्ति वसु किं चन ।
तत्सर्वं तव विश्रब्धं कुरु प्रणयमीश्वर ॥२॥
हंसानां वचनं यत्तु तन्मां दहति पार्थिव ।
त्वत्कृते हि मया वीर राजानः संनिपातिताः ॥३॥
20 यदि त्वं भजमानां मां प्रत्याख्यास्यसि मानद ।

विषमग्निं जलं रज्जुमास्थास्ये तव कारणात् ॥४॥
एवमुक्तस्तु वैदर्भ्या नलस्तां प्रत्युवाच ह ।
तिष्ठत्सु लोकपालेषु कथं मानुषमिच्छसि ॥५॥
येषामहं लोककृतामीश्वराणां महात्मनाम् ।
5 न पादरजसा तुल्यो मनस्ते तेषु वर्तताम् ॥६॥
विप्रियं ह्याचरन्मर्त्यो देवानां मृत्युमृच्छति ।
त्राहि मामनवद्याङ्गि वरयस्व सुरोत्तमान् ॥७॥
विरजांसि च वासांसि दिव्याश्चित्राः स्रजस्तथा ।
भूषणानि च मुख्यानि देवान्प्राप्य तु भुङ्क्ष्व वै ॥८॥
10 य इमां पृथिवीं कृत्स्नां संक्षिप्य ग्रसते पुनः ।
हुताशमीशं देवानां का तं न वरयेत्पतिम् ॥९॥
यस्य दण्डभयात्सर्वे भूतग्रामाः समागताः ।
धर्ममेवानुरुध्यन्ति का तं न वरयेत्पतिम् ॥१०॥
धर्मात्मानं महात्मानं दैत्यदानवमर्दनम् ।
15 महेन्द्रं सर्वदेवानां का तं न वरयेत्पतिम् ॥११॥
क्रियतामविशङ्केन मनसा यदि मन्यसे ।
वरणं लोकपालानां सुहृद्वाक्यमिदं शृणु ॥१२॥
नैषधेनैवमुक्ता सा दमयन्ती वचो ऽब्रवीत् ।
समाप्लुताभ्यां नेत्राभ्यां शोकजेनाथ वारिणा ॥१३॥
20 देवेभ्यो ऽहं नमस्कृत्य सर्वेभ्यः पृथिवीपते ।
वृणे त्वामेव भर्तारं सत्यमेतद्ब्रवीमि ते ॥१४॥
तामुवाच ततो राजा वेपमानां कृताञ्जलिम् ।
दौत्येनागत्य कल्याणि कथं स्वार्थमिहोत्सहे ॥१५॥

कथं ह्यहं प्रतिश्रुत्य देवतानां विशेषतः ।
परार्थे यत्नमारभ्य कथं स्वार्थमिहोत्सहे ॥ १६ ॥
एष धर्मो यदि स्वार्थो ममापि भविता ततः ।
एवं स्वार्थं करिष्यामि तथा भद्रे विधीयताम् ॥ १७ ॥
5 ततो बाष्पाकुलां वाचं दमयन्ती शुचिस्मिता ।
प्रत्याहरन्ती शनकैर्नलं राजानमब्रवीत् ॥ १८ ॥
उपायो ऽयं मया दृष्टो निरपायो नरेश्वर ।
येन दोषो न भविता तव राजन्कथं चन ॥ १९ ॥
त्वं चैव हि नरश्रेष्ठ देवाश्चेन्द्रपुरोगमाः ।
10 आयान्तु सहिताः सर्वे मम यत्र स्वयंवरः ॥ २० ॥
ततो ऽहं लोकपालानां संनिधौ त्वां नरेश्वर ।
वरयिष्ये नरव्याघ्र नैवं दोषो भविष्यति ॥ २१ ॥
एवमुक्तस्तु वैदर्भ्या नलो राजा विशां पते ।
आजगाम पुनस्तत्र यत्र देवाः समागताः ॥ २२ ॥
15 तमपश्यंस्तथायान्तं लोकपाला महेश्वराः ।
दृष्ट्वा चैनं ततो ऽपृच्छन्वृत्तान्तं सर्वमेव तम् ॥ २३ ॥
कच्चिद्दृष्टा त्वया राजन्दमयन्ती शुचिस्मिता ।
किमब्रवीच्च नः सर्वान्वद भूमिपते ऽनघ ॥ २४ ॥

नल उवाच ।

20 भवद्भिरहमादिष्टो दमयन्त्या निवेशनम् ।
प्रविष्टः सुमहाकक्ष्यं दण्डिभिः स्थविरैर्वृतम् ॥ २५ ॥
प्रविशन्तं च मां तत्र न कश्चिद्दृष्टवान्नरः ।
ऋते तां पार्थिवसुतां भवतामेव तेजसा ॥ २६ ॥

सख्यश्चास्या मया दृष्टास्ताभिश्चाप्युपलक्षितः ।
विस्मिताश्चाभवन्सर्वा दृष्ट्वा मां विबुधेश्वराः ॥ २७ ॥
वर्ण्यमानेषु च मया भवत्सु रुचिरानना ।
मामेव गतसंकल्पा वृणीते सा सुरोत्तमाः ॥ २८ ॥
5 अब्रवीच्चैव मां बाला आयान्तु सहिताः सुराः ।
त्वया सह नरव्याघ्र मम यत्र स्वयंवरः ॥ २९ ॥
तेषामहं संनिधौ त्वां वरयिष्यामि नैषध ।
एवं तव महाबाहो दोषो न भवितेति ह ॥ ३० ॥
एतावदेव विबुधा यथावृत्तमुदाहृतम् ।
10 मया शेषे प्रमाणं तु भवन्तस्त्रिदशेश्वराः ॥ ३१ ॥

॥ इति नलोपाख्याने चतुर्थः सर्गः ॥ ४ ॥

---

बृहदश्व उवाच ।
अथ काले शुभे प्राप्ते तिथौ पुण्ये क्षणे तथा ।
आजुहाव महीपालान्भीमो राजा स्वयंवरे ॥ १ ॥
15 तच्छ्रुत्वा पृथिवीपालाः सर्वे हृच्छयपीडिताः ।
त्वरिताः समुपाजग्मुर्दमयन्तीमभीप्सवः ॥ २ ॥
कनकस्तम्भरुचिरं तोरणेन विराजितम् ।
विविशुस्ते नृपा रङ्गं महासिंहा इवाचलम् ॥ ३ ॥
तत्रासनेषु विविधेष्वासीनाः पृथिवीक्षितः ।
20 सुरभिस्रग्धराः सर्वे प्रमृष्टमणिकुण्डलाः ॥ ४ ॥
तत्र स्म पीना दृश्यन्ते बाहवः परिघोपमाः ।

आकारवन्तः सुश्लक्ष्णाः पञ्चशीर्षा इवोरगाः ॥ ५ ॥
सुकेशान्तानि चारूणि सुनासाक्षिभ्रुवाणि च ।
मुखानि राज्ञां शोभन्ते नक्षत्राणि यथा दिवि ॥ ६ ॥
दमयन्ती ततो रङ्गं प्रविवेश शुभानना ।
5 मुष्णन्ती प्रभया राज्ञां चक्षूंषि च मनांसि च ॥ ७ ॥
तस्या गात्रेषु पतिता तेषां दृष्टिर्महात्मनाम् ।
तत्र तत्रैव सक्ताभून्न चचाल च पश्यताम् ॥ ८ ॥
ततः संकीर्त्यमानेषु राज्ञां नामसु भारत ।
ददर्श भैमी पुरुषान्पञ्च तुल्याकृतीनथ ॥ ९ ॥
10 तान्समीक्ष्य ततः सर्वान्निर्विशेषाकृतीन्स्थितान् ।
संदेहादथ वैदर्भी नाभ्यजानान्नलं नृपम् ॥ १० ॥
यं यं हि ददृशे तेषां तं तं मेने नलं नृपम् ।
सा चिन्तयन्ती बुद्ध्याथ तर्कयामास भाविनी ॥ ११ ॥
कथं हि देवाञ्जानीयां कथं विद्यां नलं नृपम् ॥ १२ ॥
15 एवं संचिन्तयन्ती सा वैदर्भी भृशदुःखिता ।
श्रुतानि देवलिङ्गानि तर्कयामास भारत ॥ १३ ॥
देवानां यानि लिङ्गानि स्थविरेभ्यः श्रुतानि मे ।
तानीह तिष्ठतां भूमावेकस्यापि न लक्षये ॥ १४ ॥
सा विनिश्चित्य बहुधा विचार्य च पुनः पुनः ।
20 शरणं प्रति देवानां प्राप्तकालममन्यत ॥ १५ ॥
वाचा च मनसा चैव नमस्कारं प्रयुज्य सा ।
देवेभ्यः प्राञ्जलिर्भूत्वा वेपमानेदमब्रवीत् ॥ १६ ॥
हंसानां वचनं श्रुत्वा यथा मे नैषधो वृतः ।

पतित्वे तेन सत्येन देवास्तं प्रदिशन्तु मे ॥१७॥
वचसा मनसा चैव यथा नाभिचराम्यहम् ।
तेन सत्येन विबुधास्तमेव प्रदिशन्तु मे ॥१८॥
यथा देवैः स मे भर्ता विहितो निषधाधिपः ।
5 तेन सत्येन मे देवास्तमेव प्रदिशन्तु मे ॥१९॥
यथेदं व्रतमारब्धं नलस्याराधने मया ।
तेन सत्येन मे देवास्तमेव प्रदिशन्तु मे ॥२०॥
स्वं चैव रूपं कुर्वन्तु लोकपाला महेश्वराः ।
यथाहमभिजानीयां पुण्यश्लोकं नराधिपम् ॥२१॥
10 निशम्य दमयन्त्यास्तत्करुणं परिदेवितम् ।
यथोक्तं चक्रिरे देवाः सामर्थ्यं लिङ्गधारणे ॥२२॥
सापश्यद्विबुधान्सर्वानस्वेदान्स्तब्धलोचनान् ।
हृषितस्रग्रजोहीनान्स्थितानस्पृशतः क्षितिम् ॥२३॥
छायाद्वितीयो म्लानस्रग्रजःस्वेदसमन्वितः ।
15 भूमिष्ठो नैषधश्चैव निमेषेण च सूचितः ॥२४॥
सा समीक्ष्य तु तान्देवान्पुण्यश्लोकं च भारत ।
नैषधं वरयामास भैमी धर्मेण पाण्डव ॥२५॥
विलज्जमाना वस्त्रान्ते जग्राहायतलोचना ।
स्कन्धदेशे ऽसृजत्तस्य स्रजं परमशोभनाम् ॥२६॥
20 वरयामास चैवैनं पतित्वे वरवर्णिनी ।
ततो हा हेति सहसा मुक्तः शब्दो नराधिपैः ॥२७॥
देवैर्महर्षिभिस्तत्र साधु साध्विति भारत ।
विस्मितैरीरितः शब्दः प्रशंसद्भिर्नलं नृपम् ॥२८॥

दमयन्तीं तु कौरव्य वीरसेनसुतो नृपः ।
आश्वासयद्वरारोहां प्रहृष्टेनान्तरात्मना ॥२९॥
यत्त्वं भजसि कल्याणि पुमांसं देवसंनिधौ ।
तस्मान्मां विद्धि भर्तारमेवं ते वचने रतम् ॥३०॥
5 यावच्च मे धरिष्यन्ति प्राणा देहे शुचिस्मिते ।
तावत्त्वयि भविष्यामि सत्यमेतद्ब्रवीमि ते ॥३१॥
दमयन्तीं तथा वाग्भिरभिनन्द्य कृताञ्जलिः ।
. . . . . . . . . . . . . . . . . ॥३२॥
तौ परस्परतः प्रीतौ दृष्ट्वा त्वग्निपुरोगमान् ।
10 तानेव शरणं देवाञ्जग्मतुर्मनसा तदा ॥३३॥
वृते तु नैषधे भैम्या लोकपाला महौजसः ।
प्रहृष्टमनसः सर्वे नलायाष्टौ वरान्ददुः ॥३४॥
प्रत्यक्षदर्शनं यज्ञे गतिं चानुत्तमां शुभाम् ।
नैषधाय ददौ शक्रः प्रीयमाणः शचीपतिः ॥३५॥
15 अग्निरात्मभवं प्रादाद्यत्र वाञ्छति नैषधः ।
लोकानात्मप्रभांश्चैव ददौ तस्मै हुताशनः ॥३६॥
यमस्त्वन्नरसं प्रादाद्धर्मे च परमां स्थितिम् ।
अपां पतिरपां भावं यत्र वाञ्छति नैषधः ॥३७॥
स्रजश्चोत्तमगन्धाढ्याः सर्वे च मिथुनं ददुः ।
20 वरानेवं प्रदायास्य देवास्ते त्रिदिवं गताः ॥३८॥
पार्थिवाश्चानुभूयास्य विवाहं विस्मयान्विताः ।
दमयन्त्याश्च मुदिताः प्रतिजग्मुर्यथागतम् ॥३९॥
गतेषु पार्थिवेन्द्रेषु भीमः प्रीतो महामनाः ।

विवाहं कारयामास दमयन्त्या नलस्य च ॥४०॥
उष्य तत्र यथाकामं नैषधो द्विपदां वरः ।
भीमेन समनुज्ञातो जगाम नगरं स्वकम् ॥४१॥
अतीव मुदितो राजा भ्राजमानों ऽंशुमानिव ।
5 अरञ्जयत्प्रजा वीरो धर्मेण परिपालयन् ॥४२॥
ईजे चाप्यश्वमेधेन ययातिरिव नाहुषः ।
अन्यैश्च बहुभिर्धीमान्क्रतुभिश्चाप्तदक्षिणैः ॥४३॥
पुनश्च रमणीयेषु वनेषूपवनेषु च ।
दमयन्त्या सह नलो विजहारामरोपमः ॥४४॥
10 जनयामास च नलो दमयन्त्यां महामनाः ।
इन्द्रसेनं सुतं चापि इन्द्रसेनां च कन्यकाम् ॥४५॥
एवं स यजमानश्च विहरंश्च नराधिपः ।
ररक्ष वसुसंपूर्णां वसुधां वसुधाधिपः ॥४६॥

॥ इति नलोपाख्याने पञ्चमः सर्गः ॥५॥

---

15 ॥ अथ हितोपदेशः ॥

II.

श्रुतो हितोपदेशो ऽयं पाटवं संस्कृतोक्तिषु ।
वाचां सर्वत्र वैचित्र्यं नीतिविद्यां ददाति च ॥
अजरामरवत्प्राज्ञो विद्यामर्थं च चिन्तयेत् ।
गृहीत इव केशेषु मृत्युना धर्ममाचरेत् ॥

सर्वद्रव्येषु विद्यैव द्रव्यमाहुरनुत्तमम् ।
अहार्यत्वादनर्घ्यत्वादक्षयत्वाच्च सर्वदा ॥
विद्या शस्त्रं च शास्त्रं च द्वे विद्ये प्रतिपत्तये ।
आद्या हास्याय वृद्धत्वे द्वितीयाद्रियते सदा ॥
5 यन्नवे भाजने लग्नः संस्कारो नान्यथा भवेत् ।
कथाच्छलेन बालानां नीतिस्तदिह कथ्यते ॥
मित्रलाभः सुहृद्भेदो विग्रहः संधिरेव च ।
पञ्चतन्त्रात्तथान्यस्माद्ग्रन्थादाकृष्य लिख्यते ॥

---

अस्ति भागीरथीतीरे पाटलिपुत्रनामधेयं नगरम् । तत्र स-
10 र्वस्वामिगुणोपेतः सुदर्शनो नाम नरपतिरासीत् । स भूपतिरे-
कदा केनापि पठ्यमानं श्लोकद्वयं शुश्राव ।

अनेकसंशयोच्छेदि परोक्षार्थस्य दर्शकम् ।
सर्वस्य लोचनं शास्त्रं यस्य नास्त्यन्ध एव सः ॥
यौवनं धनसंपत्तिः प्रभुत्वमविवेकता ।
15 एकैकमप्यनर्थाय किं पुनस्तु चतुष्टयम् ॥

इत्याकर्ण्यात्मनः पुत्राणामनधिगतशास्त्राणां नित्यमुन्मार्गगा-
मिनां शास्त्राननुष्ठानेनोद्विग्नमनाः स राजा चिन्तयामास ।

को ऽर्थः पुत्रेण जातेन यो न विद्वान्न धार्मिकः ।
काणेन चक्षुषा किं वा चक्षुःपीडैव केवलम् ॥
20 अजातमृतमूर्खाणां वरमाद्यौ न चान्तिमः ।
सकृद्दुःखकरावाद्यावन्तिमस्तु पदे पदे ॥

किं च । स जातो येन जातेन याति वंशः समुन्नतिम् ।

परिवर्त्तिनि संसारे मृतः को वा न जायते ॥

अपरं च । वरमेको गुणी पुत्रो न च मूर्खशतैरपि ।
एकश्चन्द्रस्तमो हन्ति न च तारागणैरपि ॥
यस्य तस्य प्रसूतो ऽपि गुणवान्पूज्यते नरः ।
5 धनुर्वंशविशुद्धो ऽपि निर्गुणः किं करिष्यति ॥
हा हा पुत्रक नाधीत सुगतैतासु रात्रिषु ।
तेन त्वं विदुषां मध्ये पङ्के गौरिव सीदसि ॥

तत्कथमिदानीमेते मम पुत्रा गुणवन्तः क्रियन्ताम् । यच्चो-
च्यते । यदभावि न तद्भावि भावि चेन्न तदन्यथा ।
10 इति चिन्ताविषघ्नो ऽयमगदः किं न पीयते ॥

एतत्कार्याक्षमाणां केषां चिदालस्यवचनम् ।
न दैवमिति संचिन्त्य त्यजेदुद्योगमात्मनः ।
अनुद्योगेन कस्तैलं तिलेभ्यः प्राप्तुमर्हति ॥

अन्यच्च । उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीर्
15 दैवेन देयमिति कापुरुषा वदन्ति ।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिध्यति को ऽत्र दोषः ॥
यथा ह्येकेन चक्रेण रथस्य न गतिर्भवेत् ।
एवं पुरुषकारेण विना दैवं न सिध्यति ॥

20 तथा च । पूर्वजन्मकृतं कर्म तद्दैवमिति कथ्यते ।
तस्मात्पुरुषकारेण यत्नं कुर्यादतन्द्रितः ॥
उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः ।
न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ॥

मूर्खो ऽपि शोभते तावत्सभायां वस्त्रवेष्टितः ।
तावच्च शोभते मूर्खो यावत्किं चिन्न भाषते ॥

एतच्चिन्तयित्वा स राजा पण्डितसभां कारितवान् । राजोवाच । भो भोः पण्डिताः । श्रूयताम् । अस्ति कश्चिदेवंभूतो विद्वान्यो 5 मम पुत्राणां नित्यमुन्मार्गगामिनामनधिगतशास्त्राणामिदानीं नीतिशास्त्रोपदेशेन पुनर्जन्म कारयितुं समर्थः ।

यतः । काचः काञ्चनसंसर्गाद्धत्ते मारकतीं द्युतिम् ।
तथा सत्संनिधानेन मूर्खो याति प्रवीणताम् ॥

उक्तं च । हीयते हि मतिस्तात हीनैः सह समागमात् ।
10 समैश्च समतामेति विशिष्टैश्च विशिष्टताम् ॥

अत्रान्तरे विष्णुशर्मनामा महापण्डितः सकलनीतिशास्त्रतत्त्वज्ञो बृहस्पतिरिवाब्रवीत् । देव । महाकुलसंभूता एते राजपुत्राः । तन्मया नीतिं ग्राहयितुं शक्यन्ते ।

यतः । नाद्रव्ये निहिता का चित्क्रिया फलवती भवेत् ।
15 न व्यापारशतेनापि शुकवत्पाठ्यते बकः ॥

अन्यच्च । अस्मिंस्तु निर्गुणं गोत्रे नापत्यमुपजायते ।
आकरे पद्मरागाणां जन्म काचमणेः कुतः ॥

अतो ऽहं षण्मासाभ्यन्तरे तव पुत्रान्नीतिशास्त्राभिज्ञान्करिष्यामि । राजा सविनयं पुनरुवाच ।

20 कीटो ऽपि सुमनःसङ्गादारोहति सतां शिरः ।
अश्मापि याति देवत्वं महद्भिः सुप्रतिष्ठितः ॥

तदेतेषामस्मत्पुत्राणां नीतिशास्त्रोपदेशाय भवन्तः प्रमाणम् । इत्युक्त्वा तस्य विष्णुशर्मणो बहुमानपुरःसरं पुत्रान्समर्पित-

वान् । अथ प्रासादपृष्ठे सुखोपविष्टानां राजपुत्राणां पुरस्ता-
त्प्रस्तावक्रमेण स पण्डितो ऽब्रवीत् ।

काव्यशास्त्रविनोदेन कालो गच्छति धीमताम् ।
व्यसनेन तु मूर्खाणां निद्रया कलहेन वा ॥

5 तद्भवतां विनोदाय काककूर्मादीनां विचित्रां कथां कथयामि ।
राजपुत्रैरुक्तम् । आर्य । कथ्यताम् । विष्णुशर्मोवाच । शृणुत
यूयम् । संप्रति मित्रलाभः प्रस्तूयते ।

---

III.

अहमेकदा दक्षिणारण्ये चरन्नपश्यम् । एको वृद्धव्याघ्रः स्ना-
तः कुशहस्तः सरस्तीरे ब्रूते । भो भोः पान्थाः । इदं सुवर्णकङ्क-
10 णं गृह्यताम् । तद्वचनमाकर्ण्य भयात्को ऽपि तत्पार्श्वं न भज-
ते । ततो लोभाकृष्टेन केन चित्पान्थेनालोचितम् । भाग्येनै-
तत्संभवति । किं त्वस्मिन्नात्मसंदेहे प्रवृत्तिर्न विधेया । यतः ।

अनिष्टादिष्टलाभे ऽपि न गतिर्जायते शुभा ।
यत्रास्ति विषसंसर्गो ऽमृतं तदपि मृत्यवे ॥

15 किं तु सर्वत्रार्थार्जने प्रवृत्तिः संदेह एव । तथा चोक्तम् ।

न संशयमनारुह्य नरो भद्राणि पश्यति ।
संशयं पुनरारुह्य यदि जीवति पश्यति ॥

तन्निरूपयामि तावत् । प्रकाशं ब्रूते । कुत्र तव कङ्कणम् ।
व्याघ्रो हस्तं प्रसार्य दर्शयति । पान्थो ऽवदत् । कथं मारात्मके
20 त्वयि विश्वासः । व्याघ्र उवाच । शृणु रे पान्थ । प्रागेव यौ-

वनदशायामतिदुर्वृत्त आसम्। अनेकगोब्राह्मणमनुष्यवधान्मे
पुत्रा अनेकशो मृता दाराश्च। सांप्रतं निर्वंशो ऽस्मि। ततः के-
नापि धार्मिकेणाहमुपदिष्टः। दानधर्ममाचरतु भवानिति। त-
दुपदेशादिदानीमहं स्नानशीलो दाता वृद्धो गलितनखदन्तो
5 दयावांश्च कथं न विश्वासभूमिः। उक्तं च।

इज्याध्ययनदानानि तपः सत्यं क्षमा दमः।
अलोभ इति मार्गो ऽयं धर्मस्याष्टविधः स्मृतः॥
तत्र पूर्वश्चतुर्वर्गो दम्भार्थमपि सेव्यते।
उत्तरश्च चतुर्वर्गो नामहात्मसु विद्यते॥

10 मम चैतावाल्ँ लोभविरहो येन स्वहस्तगतमपि सुवर्णकङ्कणं
यस्मै कस्मै चिद्दातुमिच्छामि। तथापि व्याघ्रो मानुषं खादतीति
लोकप्रवादो दुर्निवारः। यतः।

गतानुगतिको लोकः कुट्टनीमुपदेशिनीम्।
प्रमाणयति नो धर्मे यथा गोघ्नमपि द्विजम्॥

15 मया च धर्मशास्त्राण्यधीतानि। शृणु।

मरुस्थल्यां यथा वृष्टिः क्षुधार्ते भोजनं तथा।
दरिद्रे दीयते दानं सफलं पाण्डुनन्दन॥
प्राणा यथात्मनो ऽभीष्टा भूतानामपि ते तथा।
आत्मौपम्येन सर्वत्र दयां कुर्वन्ति साधवः॥

20 अपरं च। प्रत्याख्याने च दाने च सुखदुःखे प्रियाप्रिये।
आत्मौपम्येन पुरुषः प्रमाणमधिगच्छति॥

अन्यच्च। मातृवत्परदारांश्च परद्रव्याणि लोष्टवत्।
आत्मवत्सर्वभूतानि यः पश्यति स पश्यति॥

त्वं च दुर्गतः। तेन तत्तुभ्यं दातुं सयत्नो ऽहम्। तथा चोक्तम्।

दरिद्रान्भर कौन्तेय मा प्रयच्छेश्वरे धनम्।
व्याधितस्यौषधं पथ्यं नीरुजस्तु किमौषधैः॥

अन्यच्च। दातव्यमिति यद्दानं दीयते ऽनुपकारिणे।
5 देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम्॥

तदत्र सरसि स्नात्वा सुवर्णकङ्कणमिदं प्रतिगृहाण। ततो जातविश्वासो यावदसौ सरः स्नातुं प्रविष्टस्तावदेव महापङ्के निमग्नः पलायितुमक्षमः। पङ्के पतितं दृष्ट्वा व्याघ्रो ऽवदत्। अहह। महापङ्के पतितो ऽसि। अतस्त्वामुत्थापयामि। इत्युक्त्वा 10 शनैः शनैरुपगम्य तेन व्याघ्रेण धृतः स पान्थो ऽचिन्तयत्।

न धर्मशास्त्रं पठतीति कारणं
न चापि वेदाध्ययनं दुरात्मनः।
स्वभाव एवात्र तथातिरिच्यते
यथा प्रकृत्या मधुरं गवां पयः॥

15 किं च। अवशेन्द्रियचित्तानां हस्तिस्नानमिव क्रिया।
दुर्भगाभरणप्रायो ज्ञानं भारः क्रियां विना॥

तन्न मया भद्रं कृतं यदत्र मारात्मके विश्वासः कृतः। तथा ह्युक्तम्। नखिनां च नदीनां च शृङ्गिणां शस्त्रपाणिनाम्।
विश्वासो नैव कर्तव्यः स्त्रीषु राजकुलेषु च॥

20 अपरं च। सर्वस्य हि परीक्ष्यन्ते स्वभावा नेतरे गुणाः।
अतीत्य हि गुणान्सर्वान्स्वभावो मूर्ध्नि वर्तते॥

अन्यच्च। स हि गगनविहारी कल्मषध्वंसकारी
दशशतकरधारी ज्योतिषां मध्यचारी।

विधुरपि विधियोगाद्ग्रस्यते राहुणासौ
लिखितमपि ललाटे प्रोज्झितुं कः समर्थः ॥
इति चिन्तयन्नेव तेनासौ व्याघ्रेण व्यापादितः खादितश्च ।

---

## IV.

अस्ति मगधदेशे चम्पकवती नामारण्यानी । तस्यां चिरा-
5 न्महता स्नेहेन मृगकाकौ निवसतः । स च मृगः स्वेच्छया भ्रा-
म्यन्पुष्टाङ्गः केन चित्सृगालेनावलोकितः । तं दृष्ट्वा सृगालो
ऽचिन्तयत् । आः । कथमेतन्मांसं सुललितं भक्षयामि । भ-
वतु । विश्वासं तावदुत्पादयामि । इत्यालोच्योपसृत्याब्रवीत् ।
मित्र । कुशलं ते । मृगेणोक्तम् । कस्त्वम् । जम्बुको ब्रूते । क्षु-
10 द्रबुद्धिनामा जम्बुको ऽहम् । अत्रारण्ये मित्रबन्धुहीनो मृतव-
देकाकी निवसामि । इदानीं भवन्तं मित्रमासाद्य पुनः सब-
न्धुर्जीवलोकं प्रविष्टो ऽस्मि । अधुना मया तवानुचरेण सर्व-
था भवितव्यम् । मृगेणोक्तम् । एवमस्तु । ततो ऽस्तं गते स-
वितरि भगवति मरीचिमालिनि मृगस्य वासभूमिं प्रति मृ-
15 गजम्बुकौ गतौ । तत्र चम्पकवृक्षशाखायां सुबुद्धिनामा काको
मृगस्य चिरमित्रं निवसति । तौ दृष्ट्वा काको ऽवदत् । सखे
चित्राङ्ग । को ऽयं द्वितीयः । मृगो ब्रूते । जम्बुको ऽयमस्म-
त्सख्यमिच्छन्नागतः । काको ब्रूते । मित्र । अकस्मादागन्तुना
सह विश्वासो नैव युक्तः । तन्न भद्रमाचरितम् । तथा चोक्तम् ।
20 अज्ञातकुलशीलस्य वासो देयो न कस्य चित् ।
मार्जारस्य हि दोषेण हतो गृध्रो जरद्गवः ॥

इत्याकर्ण्य स जम्बुकः सकोपमाह। मृगस्य प्रथमदर्शनदिने भवानप्यज्ञातकुलशील एवासीत्। तद्भवता सह कथमद्य यावदेतस्य स्नेहानुवृत्तिरुत्तरोत्तरं वर्धते।

यत्र विद्वज्जनो नास्ति श्लाघ्यस्तत्राल्पधीरपि।
5 निरस्तपादपे देशे एरण्डोऽपि द्रुमायते॥

अन्यच्च। अयं निजः परो वेति गणना लघुचेतसाम्।
उदारचरितानां तु वसुधैव कुटुम्बकम्॥

यथा चायं मृगो मम बन्धुस्तथा भवानपि। मृगोऽब्रवीत्। किमनेनोत्तरोत्तरेण। सर्वैरेकत्र विश्रम्भालापैः सुखमनुभवद्भिः
10 स्थीयताम्। यतः।

न कश्चित्कस्य चिन्मित्रं न कश्चित्कस्य चिद्रिपुः।
व्यवहारेण मित्राणि जायन्ते रिपवस्तथा॥

काकेनोक्तम्। एवमस्तु। अथ प्रातः सर्वे यथाभिमतदेशं गताः। एकदा निभृतं सृगालो ब्रूते। सखे मृग। एतस्मिन्नेव व-
15 नैकदेशे सस्यपूर्णं क्षेत्रमस्ति। तदहं त्वां तत्र नीत्वा दर्शयामि। तथा कृते सति मृगः प्रत्यहं तत्र गत्वा सस्यं खादति। अथ क्षेत्रपतिना तद्दृष्ट्वा पाशास्तत्र नियोजिताः। अनन्तरं पुनरागतो मृगस्तत्र चरन्पाशैर्बद्धोऽचिन्तयत्। को मामितः कालपाशादिव व्याधपाशात्त्रातुं मित्रादन्यः समर्थः। अत्रान्तरे
20 जम्बुकस्तत्रागत्योपस्थितोऽचिन्तयत्। फलितं तावदस्माकं कपटप्रबन्धेन। मनोरथसिद्धिरपि बाहुल्यान्मे भविष्यति। एतस्योत्कृत्यमानस्य मांसासृगनुलिप्तान्यस्थीनि मयावश्यं प्राप्तव्यानि। स च मृगस्तं दृष्ट्वोल्लसितो ब्रूते। सखे। छिन्द्धि ता-

वन्मम बन्धनम्। सत्वरं त्रायस्व माम्। यतः।

आपत्सु मित्रं जानीयाद्युद्धे शूरमृणे शुचिम्।
भार्यां क्षीणेषु वित्तेषु व्यसनेषु च बान्धवान्॥

अपरं च। उत्सवे व्यसने चैव दुर्भिक्षे शत्रुसंकटे।
5 राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः॥

जम्बुकः पाशं मुहुर्मुहुर्विलोक्याचिन्तयत्। दृढबन्धनबद्धो ऽस्ति तावदयं मृगः। ब्रूते च। स्नायुनिर्मिताः पाशाः। तदद्य भट्टारकवारे कथमेतान्दन्तैः स्पृशामि। मित्र। यदि नान्यथा मन्यसे तदा प्रभाते यत्त्वयोच्यते तन्मया कर्तव्यम्। इत्युक्त्वा तत्स-
10 मीप आत्मानमाच्छाद्य स्थितः सः। अनन्तरं स काकः प्रदोषकाले मृगमनागतमवलोक्येतस्ततो ऽन्विष्य तथाविधं दृष्ट्वोवाच। सखे। किमेतत्। मृगेणोक्तम्। अवधीरितसुहृद्वाक्यस्य फलमेतत्। तथा चोक्तम्।

सुहृदां हितकामानां यः शृणोति न भाषितम्।
15 विपत्संनिहिता तस्य स नरः शत्रुनन्दनः॥

काको ब्रूते। स सृगालः क्व। मृगेणोक्तम्। मन्मांसार्थी तिष्ठत्यत्रैव। काको ब्रूते। मित्र। उक्तमेव मया पूर्वम्।

अपराधो न मे ऽस्तीति नैतद्विश्वासकारणम्।
विद्यते हि नृशंसेभ्यो भयं गुणवतामपि॥
20 परोक्षे कार्यहन्तारं प्रत्यक्षे प्रियवादिनम्।
वर्जयेत्तादृशं मित्रं विषकुम्भं पयोमुखम्॥

दीर्घं निःश्वस्य। अरे वञ्चक। किं त्वया पापकर्मणा कृतम्। यतः।

संलापितानां मधुरैर्वचोभिर्मिथ्योपचारैश्च वशीकृतानाम् ।
आशावतां श्रद्दधतां च लोके किमर्थिनां वञ्चयितव्यमस्ति ॥

अन्यच्च । उपकारिणि विश्रब्धे शुद्धमतौ यः समाचरति पापम् ।
तं जनमसत्यसंधं भगवति वसुधे कथं वहसि ॥

5 दुर्जनेन समं सख्यं प्रीतिं चापि न कारयेत् ।
उष्णो दहति चाङ्गारः शीतः कृष्णायते करम् ॥

अथ वा स्थितिरियं दुर्जनानाम् ।

प्राक्पादयोः पतति खादति पृष्ठमांसं
कर्णे कलं किमपि रौति शनैर्विचित्रम् ।
10 छिद्रं निरूप्य सहसा प्रविशत्यशङ्कः
सर्वं खलस्य चरितं मशकः करोति ॥

तथा च । दुर्जनः प्रियवादी च नैतद्विश्वासकारणम् ।
मधु तिष्ठति जिह्वाग्रे हृदये तु हलाहलम् ॥

अथ प्रभाते स क्षेत्रपतिर्लगुडहस्तस्तं प्रदेशमागच्छन्काकेनाव-
15 लोकितः । तमालोक्य काकेनोक्तम् । सखे मृग । त्वमात्मानं
मृतवत्संदर्श्य वातेनोदरं पूरयित्वा पादान्स्तब्धीकृत्य तिष्ठ । य-
दाहं शब्दं करोमि तदा त्वं सत्वरमुत्थाय पलायिष्यसि । मृग-
स्तथैव काकवचनेन स्थितः । ततः क्षेत्रपतिना हर्षोत्फुल्ललो-
चनेनावलोकितः । तथाविधं मृगमवलोक्यासौ आः स्वयंमृ-
20 तो ऽयमित्युक्त्वा मृगं बन्धनान्मोचयित्वा पाशान्संवरितुं सय-
त्नो बभूव । ततः कियद्दूरे ऽन्तरिते क्षेत्रपतौ स मृगः काकस्य
शब्दं श्रुत्वा ससंभ्रमः समुत्थाय पलायितः । तमुद्दिश्य तेन क्षे-
त्रपतिना प्रकोपात्क्षिप्तलगुडेन सृगालो व्यापादितः । तथा

चोक्तम् । त्रिभिर्वर्षैस्त्रिभिर्मासैस्त्रिभिः पक्षैस्त्रिभिर्दिनैः ।
अत्युग्रपुण्यपापानामिहैव फलमश्नुते ॥
अतो ऽहं ब्रवीमि ।
भक्ष्यभक्षकयोः प्रीतिर्विपत्तेरेव कारणम् ।
5 सृगालात्पाशबद्धो ऽसौ मृगः काकेन रक्षितः ॥

---

V.

अस्ति भागीरथीतीरे गृध्रकूटनाम्नि पर्वते महान्पर्कटीवृक्षः। तस्य कोटरे दैवदुर्विपाकाद्गलितनयनो जरद्गवो नाम गृध्रः प्रतिवसति । अथ कृपया तज्जीवनाय तद्वृक्षवासिनः पक्षिणः स्वाहारात्किं चित्किं चिद्ददति । तेनासौ जीवति । अथ कदा 10 चिद्दीर्घकर्णनामा मार्जारः पक्षिशावकान्भक्षयितुं तत्रागतः । ततस्तमायान्तं दृष्ट्वा पक्षिशावकैर्भयार्तैः कोलाहलः कृतः । तच्छ्रुत्वा जरद्गवेनोक्तम् । को ऽयमायाति । दीर्घकर्णो गृध्रमवलोक्य सभयमाह । हा हतो ऽस्मि । अधुनातिसंनिधानेन पलायनमप्यशक्यम् । तद्यथा भवितव्यं तथा भवतु । एतत्समी- 15 पमुपगच्छामि । इत्यालोच्योपसृत्याब्रवीत् । आर्य । त्वामभिवन्दे । गृध्रो ऽवदत् । कस्त्वम् । सो ऽब्रवीत् । मार्जारो ऽहम् । गृध्रो ब्रूते । तद्दूरमपसर । नो चेद्धन्तव्यो ऽसि मया । मार्जारो ऽवदत् । श्रूयतां तावदस्मद्वचनम् । ततो यद्यहं वध्यस्तदा हन्तव्यः । यतः ।

20 जातिमात्रेण कश्चित्किं वध्यते पूज्यते क्व चित् ।
व्यवहारं परिज्ञाय वध्यः पूज्यो ऽथ वा भवेत् ॥

गृध्रो ब्रूते । ब्रूहि । कीदृग्व्यापारवान् । सो ऽवदत् । अहमत्र
गङ्गातीरे नित्यस्नायी निरामिषाशी ब्रह्मचर्येण चान्द्रायणव्र-
तमाचरंस्तिष्ठामि । युष्मांश्च धर्मज्ञानरतान्विश्वासभूमयः प-
क्षिणः सर्वे सर्वदा ममाग्रे स्तुवन्ति । अतो भवद्भ्यो विद्याव-
5 योवृद्धेभ्यो धर्मं श्रोतुमिहागतः । भवन्तश्चैतादृशा धर्मज्ञा य-
न्मामतिथिं हन्तुमुद्यताः । गृहस्थस्य धर्मश्चैष समुदीरितः ।

अरावप्युचितं कार्यमातिथ्यं गृहमागते ।
छेत्तुमप्यागते छायां नोपसंहरते द्रुमः ॥

किं च । यद्यन्नं नास्ति तदा प्रीतिवचसाप्यतिथिः पूज्यः । यतः ।

10 तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता ।
एतान्यपि सतां गेहे नोच्छिद्यन्ते कदा चन ॥

अन्यच्च । बालो वा यदि वा वृद्धो युवा वा गृहमागतः ।
तस्य पूजा विधातव्या सर्वत्राभ्यागतो गुरुः ॥

अन्यच्च । निर्गुणेष्वपि सत्त्वेषु दयां कुर्वन्ति साधवः ।
15 न हि संहरते ज्योत्स्नां चन्द्रश्चाण्डालवेश्मनि ॥

अन्यच्च । अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते ।
स दत्त्वा दुष्कृतं तस्मै पुण्यमादाय गच्छति ॥

अन्यच्च । उत्तमस्यापि वर्णस्य नीचो ऽपि गृहमागतः ।
पूजनीयो यथायोग्यं सर्वदेवमयो ऽतिथिः ॥

20 गृध्रो ऽवदत् । मार्जारा हि मांसरुचयो भवन्ति पक्षिशावका-
श्चात्र निवसन्ति । तेनैवं ब्रवीमि । मार्जारो ऽप्येवं श्रुत्वा भू-
मिं स्पृष्ट्वा कर्णौ स्पृशति ब्रूते च । मया धर्मशास्त्रं श्रुत्वा वी-
तरागेणेदं दुष्करं व्रतं चान्द्रायणमध्यवसायितम् । यतः पर-

स्यां विवदमानानामपि धर्मशास्त्राणामहिंसा परमो धर्म इ-
त्यत्रैकमत्यम् । यतः ।

सर्वहिंसानिवृत्ताश्च नराः सर्वसहाश्च ये ।
सर्वस्याश्रयभूताश्च ते नराः स्वर्गगामिणः ॥

5 अन्यच्च । एक एव सुहृद्धर्मो निधने ऽप्यनुयाति यः ।
शरीरेण समं नाशं सर्वमन्यद्धि गच्छति ॥

किं च । यो ऽत्ति यस्य यदा मांसमुभयोः पश्यतान्तरम् ।
एकस्य क्षणिकी प्रीतिरन्यः प्राणैर्विमुच्यते ॥

अपि च। मर्तव्यमिति यद्दुःखं पुरुषस्योपजायते।
10 शक्यस्तेनानुमानेन परो ऽपि परिरक्षितुम् ॥ शृणु
पुनः । स्वच्छन्दवनजातेन शाकेनापि प्रपूर्यते ।
अस्य दग्धोदरस्यार्थे कः कुर्यात्पातकं महत् ॥

एवं विश्वास्य स मार्जारस्तरुकोटरे स्थितः । ततो दिनेषु ग-
च्छत्सु पक्षिशावकानाक्रम्य कोटरमानीय प्रत्यहं खादति। अथ
15 येषामपत्यानि खादितानि तैः शोकार्तैर्विलपद्भिरितस्ततो जि-
ज्ञासा समारब्धा । तत्परिज्ञाय मार्जारः कोटरान्निःसृत्य पला-
यितः। पश्चात्पतत्रिभिरितस्ततो निरूपयद्भिस्तत्र तरुकोटरे शा-
वकास्थीनि प्राप्तानि। अनन्तरं चानेनैव शावकाः खादिता
इति निश्चित्य मिलित्वा तैः पक्षिभिः स गृध्रो व्यापादितः ।
20 अतो ऽहं ब्रवीमि ।

अज्ञातकुलशीलस्य वासो देयो न कस्य चित् ।
मार्जारस्य हि दोषेण हतो गृध्रो जरद्गवः ॥

VI.

अस्ति वाराणस्यां कर्पूरपटो नाम रजकः। स चैकदा नि-
र्भरं प्रसुप्तः। तदनन्तरं द्रव्याणि हर्तुं तद्गृहं चौरः प्रविष्टः। त-
स्य प्राङ्गणे गर्दभो बद्धस्तिष्ठति कुक्कुरश्चोपविष्टः। तं चौरम-
वलोक्य गर्दभः श्वानमाह। तव तावदयं व्यापारः। तत्किमि-
5 ति त्वमुच्चैः शब्दं कृत्वा स्वामिनं न जागरयसि। कुक्कुरो ब्रूते।
माम। नियोगस्यास्य चर्चा किं त्वया कर्तव्या। त्वमेव जानासि
यथाहमेतस्याहर्निशं गृहरक्षां करोमि। यतो ऽयं चिरान्निर्वृ-
तो ममोपयोगं न जानाति तेनाधुना ममाहारदाने ऽपि
मन्दादरः। विना विधुरदर्शनं स्वामिनो ऽनुजीविषु मन्दा-
10 दरा भवन्ति। गर्दभो ब्रूते। शृणु रे बर्बर।

याचते कार्यकाले यः स किंभृत्यः स किंसुहृत्। कुक्कु-
रो ब्रूते। भृत्यान्संभावयेद्यस्तु कार्यकाले स किंप्रभुः॥
किं च। आश्रितानां भृतौ स्वामिसेवायां धर्मसेवने।
पुत्रस्योत्पादने चैव न सन्ति प्रतिहस्तकाः॥

15 ततो गर्दभः सकोपमाह। आः। पापीयांस्त्वं यः स्वामिकार्यो-
पेक्षां करोषि। भवतु। यथा स्वामी जागर्ति तथा मया कर्तव्यम्।
यतः। पृष्ठतः सेवयेदर्कं जठरेण हुताशनम्।
स्वामिनं सर्वभावेन परलोकममायया॥
इत्युक्त्वा स अतीव चीत्कारं कृतवान्। ततः स रजकस्तेन ची-
20 त्कारेण प्रबुद्धो निद्राविमर्दकोपादुत्थाय गर्दभं लगुडेन ताड-
यामास। अतो ऽहं ब्रवीमि।

पराधिकारचर्चां यः कुर्यात्स्वामिहितेच्छया।

स विषीदति चीत्कारात्ताडितो गर्दभो यथा ॥

---

VII.

अस्त्युत्तरापथे ऽर्बुदशिखरनाम्नि पर्वते महाविक्रमो नाम सिंहः। तस्य पर्वतकन्दरमधिशयानस्य केसराग्रं मूषिकः कश्चिच्छिनत्ति। स सिंहः केसराग्रं लूनं बुद्ध्वा कुपितो विवरान्तर्गतं 5 मूषिकमलभमानो ऽचिन्तयत्। किं विधेयमत्र। भवतु। एवं श्रूयते। क्षुद्रशत्रुर्भवेद्यस्तु विक्रमान्न स लभ्यते।
तं निहन्तुं पुरस्कार्यः सदृशस्तस्य सैनिकः ॥
इत्यालोच्य तेन ग्रामं गत्वा दधिकर्णनामा बिडालो मांसाद्याहारेण संतोष्य प्रयत्नादानीय स्वकन्दरे धृतः। ततस्तद्भया- 10 न्मूषिको बहिर्न निःसरति। तेनासौ सिंहो ऽक्षतकेसरः सुखं स्वपिति। मूषिकशब्दं यदा यदा शृणोति तदा तदा सविशेषं तं बिडालं मांसाहारदानेन संवर्धयति। अथैकदा स मूषिकः क्षुधा पीडितो बहिः संचरंस्तेन मार्जारेण प्राप्तो व्यापादितः खादितश्च। अनन्तरं स सिंहो यदा कदा चिदपि मूषिकशब्दं 15 न शुश्राव तदोपयोगाभावात्तस्य बिडालस्याहारदाने मन्दादरो बभूव। अतो ऽहं ब्रवीमि।

निरपेक्षो न कर्तव्यो भृत्यैः स्वामी कदा चन।
निरपेक्षं प्रभुं कृत्वा भृत्यः स्याद्दधिकर्णवत् ॥

---

VIII. IX.

कस्मिंश्चित्तरौ वायसदंपती निवसतः। तयोश्चापत्यानि त-

रुकोटरावस्थितकृष्णसर्पेण खादितानि। ततः पुनर्गर्भवती वायसी ब्रूते। स्वामिन्। त्यज्यतामयं तरुः। अत्र यावत्कृष्णसर्पस्तावदावयोः संततिः कदा चिदपि न भविष्यति। यतः।

दुष्टा भार्या शठं मित्रं भृत्यश्चोत्तरदायकः।
5 ससर्पे च गृहे वासो मृत्युरेव न संशयः॥

वायसो ब्रूते। प्रिये। न भेतव्यम्। वारं वारं मयैतस्य महापराधः सोढः। इदानीं पुनर्न क्षन्तव्यः। वायस्याह। कथमनेन बलवता कृष्णसर्पेण सार्धं भवान्विग्रहीतुं समर्थः। वायसो ब्रूते। अलमनया चिन्तया। यतः।

10 यस्य बुद्धिर्बलं तस्य निर्बुद्धेस्तु कुतो बलम्।
वने सिंहो बलोन्मत्तः शशकेन निपातितः॥

वायस्याह। कथमेतत्। वायसः कथयति। अस्ति मन्दरनाम्नि पर्वते दुर्दान्तो नाम सिंहः। स च सर्वदा पशूनां वधं विदधान एवास्ते। ततः सर्वैः पशुभिर्मेलकं कृत्वा स सिं-
15 हो विज्ञप्तः। देव। किमर्थं सर्वपशुवधः क्रियते। वयमेव भवदाहारार्थं प्रत्यहमेकैकं पशुमुपढौकयामः। सिंहेनोक्तम्। यद्येतदभिमतं भवतां तर्हि भवतु। ततः प्रभृति प्रत्यहमेकैकं पशुमुपकल्पितं भक्षयन्नास्ते। अथ कदा चित्कस्यापि वृद्धशशकस्य वासरः प्राप्तः। ततः सो ऽचिन्तयत्।

20 त्रासहेतोर्विनीतिस्तु क्रियते जीविताशया।
पञ्चत्वं चेद्गमिष्यामि किं सिंहानुनयेन मे॥

तन्मन्दं मन्दमुपगच्छामि। ततः सिंहो ऽपि क्षुधा पीडितः कोपात्तमुवाच। कुतस्त्वं विलम्ब्यागतो ऽसि। शशको ऽब्र-

वीत् । नाहमपराद्धः । पथि सिंहान्तरेण बलाद्धृतस्तस्याग्रे पुनरागमनाय शपथं कृत्वा स्वामिनं निवेदयितुमत्रागतो ऽस्मि । सिंहः सकोपमाह । सत्वरं गत्वा मां दर्शय । क्वासौ दुरात्मा तिष्ठति । ततः शशकस्तं गृहीत्वा गम्भीरकूपसमीपं
5 गतः । अत्रागत्य पश्यतु स्वामीत्युक्त्वा तस्मिन्कूपजले तस्यैव प्रतिबिम्बं दर्शितवान् । ततो ऽसौ दर्पाध्मातस्तस्योपर्यात्मानं निक्षिप्य पञ्चत्वं गतः। अतो ऽहं ब्रवीमि। यस्य बुद्धिर्बलं तस्येत्यादि।

वायसी ब्रूते । श्रुतं मया । कर्तव्यतां ब्रूहि । वायसो ऽवदत्।
10 प्रिये । आसन्ने सरसि राजपुत्रः सततमागत्य स्नाति । तस्मिन्नन्तरे तदङ्गादवतारितं कनकसूत्रं चञ्च्वा धृत्वानीयास्मिन्कोटरे धरिष्यसि। अथ कनकसूत्रानुसरणप्रवृत्तैः राजपुरुषैः कोटरे निरूप्यमाणे कृष्णसर्पो द्रष्टव्यो व्यापादयितव्यश्च। अथ कदा चित्स्नातुं प्रविष्टे राजपुत्रे वायस्या तदनुष्ठितम् । तथानुष्ठिते तद्वृ-
15 त्तम् । अतो ऽहं ब्रवीमि ।

उपायेन हि तत्कुर्याद्यन्न शक्यं पराक्रमैः ।
काक्या कनकसूत्रेण कृष्णसर्पो निपातितः ॥

---

X.

अस्ति नर्मदातीरे पर्वतोपत्यकायां विशालः शाल्मलीतरुः। तत्र निर्मितनीडक्रोडे पक्षिणः सुखेन वर्षास्वपि निवसन्ति ।
20 अथ नीलपटैरिव जलधरपटलैरावृते नभस्तले धारासारैर्महती

वृष्टिर्बभूव। ततो वानरांस्तरुतले ऽवस्थिताञ्छीतार्तान्कम्पमानानवलोक्य पक्षिभिरुक्तम्। भो भो वानराः। शृणुताम्।

असाभिर्निर्मिता नीडाश्चञ्चुमात्राहृतैस्तृणैः।
हस्तपादादिसंयुक्ता यूयं किमवसीदथ॥

5 तच्छ्रुत्वा वानरैर्जातामर्षैरालोचितम्। अहो। निर्वातनीडगर्भावस्थिताः सुखिनः पक्षिणो ऽस्मान्निन्दन्ति। तद्भवतु। तावद्वृष्टेरुपशमः। अनन्तरं शान्ते पानीयवर्षे तैर्वानरैर्वृक्षमारुह्य सर्वे नीडा भग्नाः। तेषां पक्षिणामण्डानि चाधः पतितानि। अतो ऽहं ब्रवीमि।

10 विद्वानेवोपदेष्टव्यो नाविद्वांस्तु कदा चन।
वानरानुपदिश्याज्ञान्स्थानभ्रंशं ययुः खगाः॥

---

XI.

अस्ति हस्तिनापुरे कर्पूरविलासो नाम रजकः। तस्य गर्दभो ऽतिभारवाहनाद्दुर्बलो मुमूर्षुरिवाभवत्। ततस्तेन रजकेनासौ व्याघ्रचर्मणा प्रच्छाद्यारण्यसमीपे सस्यक्षेत्रे मोचितः।
15 ततो दूरादवलोक्य व्याघ्रबुद्ध्या क्षेत्रपतयः सत्वरं पलायन्ते। स च सुखेन सस्यं चरति। अथैकदा केनापि सस्यरक्षकेण धूसरकम्बलकृततनुत्राणेन धनुष्काण्डं सज्जीकृत्यावनतकायेनैकान्ते स्थितम्। तं च दूरे दृष्ट्वा गर्दभः पुष्टाङ्गो गर्दभीयमिति मत्वा शब्दं कुर्वाणस्तदभिमुखं धावितः। ततस्तेन सस्यरक्षकेण गर्द-
20 भो ऽयमिति ज्ञात्वा लीलयैव व्यापादितः। अतो ऽहं ब्रवीमि।

सुचिरं हि चरन्मौनं श्रेयः पश्यत्यबुद्धिमान् ।
द्वीपिचर्मपरिच्छन्नो वाग्दोषाद्गर्दभो हतः ॥

---

XII.

कदा चिद्वर्षास्वपि वृष्टेरभावात्तृषार्तो गजयूथो यूथपतिमाह । नाथ । को ऽप्युपायो ऽस्माकं जीवनाय नास्ति । अस्त्यत्र 5 क्षुद्रजन्तूनां निमज्जनस्थानम् । वयं च निमज्जनाभावादन्धा इव क्व यामः किं वा कुर्मः । ततो हस्तिराजो नातिदूरं गत्वा निर्मलं ह्रदं दर्शितवान् । ततस्तत्तीरावस्थिताः शशका गजयूथपादाहतिभिर्बहवश्चूर्णिताः । अनन्तरं शिलीमुखो नाम शशकः सर्वानाहूय चिन्तयामास । अनेन गजयूथेन पिपासा- 10 कुलितेन प्रत्यहमेवात्रागन्तव्यम् । अतो विनङ्क्ष्यत्यस्मत्कुलम् । अथ विजयो नाम वृद्धशशको ऽवदत् । मा विषीदत । प्रतीकारो मया कर्तव्यः । इति प्रतिज्ञाय चलितः । गच्छता च तेनालोचितम् । कथं मया गजयूथपनिकटे गत्वा वक्तव्यम् । यतः । स्पृशन्नपि गजो हन्ति जिघ्रन्नपि भुजंगमः ।
15 हसन्नपि नृपो हन्ति मानयन्नपि दुर्जनः ॥

अतो ऽहं पर्वतशिखरमारुह्य यूथनाथमभिवादयामि । तथानुष्ठिते सति यूथनाथ उवाच । कस्त्वम् । कुतः समायातः । स ब्रूते । दूतो ऽहं भगवता चन्द्रेण प्रेषितः । यूथपतिराह । कार्यमुच्यताम् । विजयो वदति । शृणु गजेन्द्र ।

20 उद्यतेष्वपि शस्त्रेषु दूतो वदति नान्यथा ।
सदैवावध्यभावेन यथार्थस्य हि वाचकः ॥

तदहं तदाज्ञया ब्रवीमि । शृणु । यदेते शशकाश्चन्द्रसरोरक्षका-
स्त्वया निःसारितास्तन्न युक्तं कृतम् । यतो रक्षकास्ते शशका
मदीया अत एव लोके मे शशाङ्क इति प्रसिद्धिः । एवमुक्तव-
ति दूते स यूथपतिर्भयादिदमाह । इदमज्ञानतः कृतम् । पुनर्न
5 गमिष्यामि । दूत उवाच । तदत्र सरसि भगवन्तं चन्द्रमसं प्रको-
पात्कम्पमानं प्रणम्य प्रसाद्य च गच्छ । ततस्तेन रात्रौ नीत्वा तत्र
जले चञ्चलं चन्द्रप्रतिबिम्बं दर्शयित्वा स यूथपतिः प्रणामं का-
रितः । देव । अज्ञानादेवानेनापराधः कृतस्तत्क्षम्यतामित्युक्त्वा
तेन शशकेन स यूथपतिः प्रस्थापितः । अतो ऽहं ब्रवीमि ।

10 व्यपदेशेन महतां सिद्धिः संजायते परा ।
शशिनो व्यपदेशेन वसन्ति शशकाः सुखम् ॥

---

XIII.

अस्ति सृगालः कश्चित्स्वेच्छया नगरोपान्ते भ्रमन्नीलसंधा-
नभाण्डे निपतितः । पश्चात्तत उत्थातुमसमर्थः प्रातरात्मानं मृ-
तवत्संदर्श्य स्थितः । अथ नीलीभाण्डस्वामिनासावुत्थाप्य दूरे
15 नीत्वा परित्यक्तः । ततो ऽसौ वनं गत्वात्मानं नीलवर्णमवलो-
क्याचिन्तयत् । अहमिदानीमुत्तमवर्णः । तदात्मनः किमुत्कर्षं
न साधयामि । इत्यालोच्य सृगालानाहूय तेनोक्तम् । अहं भ-
गवत्या वनदेवतया स्वहस्तेनारण्यराज्ये सर्वौषधिरसेनाभिषि-
क्तः । पश्यत मम वर्णम् । तदद्यारभ्यास्मदाज्ञयास्मिन्नरण्ये
20 व्यवहारः कार्यः । सृगालाश्च तं विशिष्टवर्णमवलोक्य साष्टा-
ङ्गपातं प्रणम्योचुः । यथाज्ञापयति देवः । ततो ऽनेन क्रमेण

सर्वेष्वरण्यवासिष्वाधिपत्यं तस्य बभूव। ततस्तेन सिंहव्याघ्रादीनुत्तमपरिजनान्प्राप्य सृगालानवलोक्य लज्जमानेनावज्ञया दूरीकृताः स्वज्ञातयः। ततो विषण्णान्सृगालानवलोक्य वृद्धसृगालेन केन चित्प्रतिज्ञातम्। मा विषीदत। एवं चेदनेनानीतिज्ञेन वयं मर्मज्ञाः परिभूताः तद्यथायं नश्यति तन्मया विधेयम्। यतो ऽमी व्याघ्रादयो वर्णमात्रविप्रलब्धाः सृगालमज्ञात्वा राजानममुं मन्यन्ते तद्यथायं परिचीयते तथा कुरुत। तत्र चैवमनुष्ठेयं यथा वदामि। यदा सर्वे संध्यासमये तत्संनिधाने महारावमेकदा करिष्यथ ततस्तं शब्दमाकर्ण्य स्वभावात्तेनापि शब्दः कर्तव्यः। यतः।

यः स्वभावो हि यस्य स्यात्तस्यासौ दुरतिक्रमः।
श्वा यदि क्रियते भोगी तत्किं नाश्नात्युपानहम्॥

ततः शब्दाद्विज्ञाय व्याघ्रेण हन्तव्यः। तथानुष्ठिते सति तद्वृत्तम्। तथा चोक्तम्।

छिद्रं मर्म च वीर्यं च विजानाति निजो रिपुः।
दहत्यन्तर्गतश्चैव शुष्कवृक्षमिवानलः॥

अतो ऽहं ब्रवीमि।

आत्मपक्षं परित्यज्य परपक्षे च यो रतः।
स परैर्हन्यते मूढो नीलवर्णसृगालवत्॥

---

XIV. XV. XVI.

अस्ति मगधदेशे फुल्लोत्पलाभिधानं सरः। तत्र चिरात्संकटविकटनामानौ हंसौ निवसतः। तयोर्मित्रं कम्बुग्रीवनामा

कूर्मः प्रतिवसति । अथैकदा धीवरैरागत्य तत्रोक्तं यदत्रास्मा-
भिरद्योषित्वा प्रातः कूर्ममत्स्यादयो व्यापादयितव्याः । तदाक-
र्ण्य कूर्मो हंसावाह । सुहृदौ । श्रुतो ऽयं धीवरालापः । अधुना
किं मया कर्तव्यम् । हंसावाहतुः । ज्ञायतां तावत् । पश्चाद्य-
5 दुचितं तत्कर्तव्यम् । कूर्मो ब्रूते । मैवं यतो दृष्टव्यतिकरो ऽह-
मत्र । तथा चोक्तम् ।

अनागतविधाता च प्रत्युत्पन्नमतिश्च यः ।
द्वावेतौ सुखमेधेते यद्भविष्यो विनश्यति ॥

तावाहतुः । कथमेतत् । कूर्मः कथयति । पुरैतस्मिन्नेव सर-
10 स्येवंविधेष्वेव धीवरेषूपस्थितेषु मत्स्यत्रयेणालोचितम् ।
तत्रानागतविधाता नामैको मत्स्यः । तेनोक्तम् । अहं ताव-
ज्जलाशयान्तरं गच्छामि । इत्युक्त्वा स हृदान्तरं गतः । अ-
परेण प्रत्युत्पन्नमतिनाम्ना मत्स्येनाभिहितम् । भाविन्यर्थे प्र-
माणाभावात्कुत्र मया गन्तव्यम् । तदुत्पन्ने कार्ये यथाकार्य-
15 मनुष्ठेयम् । ततो यद्भविष्येणोक्तम् ।

यदभावि न तद्भावि भावि चेन्न तदन्यथा ।
इति चिन्ताविषघ्नो ऽयमगदः किं न पीयते ॥

ततः प्रातर्जालेन बद्धः प्रत्युत्पन्नमतिर्मृतवदात्मानं संदर्श्य
स्थितः । ततो जालादपसारितः स्थलादुत्प्लुत्य गम्भीरं नीरं
20 प्रविष्टः । यद्भविष्यश्च धीवरैः प्राप्तो व्यापादितः । अतो ऽहं
ब्रवीमि । अनागतविधातेत्यादि ।

तद्यथाहमन्यहृदं प्राप्नोमि तदद्य विधीयताम् । हंसावाहतुः ।
जलाशयान्तरे प्राप्ते तव कुशलम् । स्थले गच्छतस्ते को वि-

धिः । कूर्मो ब्रूते । यथाहं भवद्भ्यां सहाकाशवर्त्मना यामि स उपायो विधीयताम् । हंसौ ब्रूतः । कथमुपायः संभवति । कच्छपो वदति । युवाभ्यां चञ्चुधृतं काष्ठमेकं मया मुखेनावलम्बितव्यम् । अतो भवतोः पक्षबलेन मयापि सुखं गन्तव्यम् ।
5 हंसौ ब्रूतः । संभवत्येष उपायः । किं तु ।

उपायं चिन्तयेत्प्राज्ञस्तथापायं च चिन्तयेत् ।
पश्यतो बकमूर्खस्य नकुलैर्भक्षिता बकाः ॥

कूर्मः पृच्छति । कथमेतत् । तौ कथयतः । अस्त्युत्तरापथे गृध्रकूटो नाम पर्वतः । तत्रैव रेवातीरे न्यग्रोधपादपे बका
10 निवसन्ति । तस्य वटस्याधस्ताद्विवरे सर्पस्तिष्ठति । स च बकानां बालापत्यानि खादति । ततः शोकार्तानां बकानां प्रलापं श्रुत्वा केन चिद्वृद्धबकेनोक्तम् । भोः । एवं कुरुत यूयम् । मत्स्यानानीय नकुलविवरादारभ्य सर्पविवरं यावत्पङ्क्तिक्रमेणैकैकशो मत्स्यान्धत्त । ततस्तदाहारवर्त्मना नकु-
15 लैरागत्य सर्पो द्रष्टव्यः स्वभावद्वेषाद्व्यापादयितव्यश्च । तथानुष्ठिते सति तद्वृत्तम् । अथ नकुलैर्वृक्षोपरि पक्षिशावकानां रावः श्रुतः । पश्चात्तैर्वृक्षमारुह्य शावकाः सर्व एव खादिताः । अत आवां ब्रूवः । उपायं चिन्तयेदित्यादि ।

आवाभ्यां नीयमानं त्वां दृष्ट्वा लोकैः किं चिद्वक्तव्यमेव । त-
20 दाकर्ण्य यदि त्वमुत्तरं ददासि तदा तव मरणं भविष्यति । तत्सर्वथात्रैव स्थीयताम् । कूर्मो वदति । किमहमज्ञः । न किमपि मया वक्तव्यम् । तत एवमनुष्ठिते सत्याकाशे नीयमानं तं कूर्ममालोक्य सर्वे गोरक्षकाः पश्चाद्धावन्ति वदन्ति च ।

अहो महदाश्चर्यम्। पक्षिभ्यां कूर्मः समुह्यते। तत्र कश्चिदाह। यद्ययं कूर्मः पतति तदात्रैव पक्त्वा खादितव्यः। को ऽपि निगदति। गृहं नेतव्यः। कश्चिद्वदति। सरसः समीपे पक्त्वा भक्षितव्यः। तत्परुषवचनमाकर्ण्य स कूर्मः क्रोधाद्विस्मृतसंस्कारो ऽवदत्।
5 युष्माभिर्भस्म भक्षितव्यम्। इति वदन्नेव काष्ठात्पतितो गोरक्षकैर्व्यापादितः। अतो ऽहं ब्रवीमि।

सुहृदां हितकामानां न करोतीह यो वचः।
स कूर्म इव दुर्बुद्धिः काष्ठाद्भ्रष्टो विनश्यति॥

---

XVII.

अस्ति गौतमारण्ये महातपा नाम मुनिः। तेनाश्रमसंनि-
10 धाने मूषिकशावकः काकमुखाद्भ्रष्टो दृष्टः। ततो दयालुना तेन मुनिना नीवारकणैः स संवर्धितः। तं च मूषिकं खादितुमनुधावन्बिडालो मुनिना दृष्टः। पश्चात्तपःप्रभावात्तेन मुनिना मूषिको बलिष्ठो बिडालः कृतः। स बिडालः कुक्कुराद्बिभेति। ततो ऽसौ कुक्कुरः कृतः। कुक्कुरस्य व्याघ्रान्महद्भयम्। तदनन्तरं स
15 व्याघ्रः कृतः। अथ व्याघ्रमपि तं मूषिकनिर्विशेषं पश्यति मुनिः। अतः सर्वे तत्रस्था जनास्तं व्याघ्रं दृष्ट्वा वदन्ति। अनेन मुनिना मूषिको ऽयं व्याघ्रतां नीतः। एतच्छ्रुत्वा स व्याघ्रः सव्यथो ऽचिन्तयत्। यावदनेन मुनिना जीवितव्यं तावदिदं मम स्वरूपाख्यानमकीर्तिकरं न पलायिष्यते। इति समालोच्य मु-
20 निं हन्तुं समुद्यतः। ततो मुनिना तस्य चिकीर्षितं ज्ञात्वा पुनर्मूषिको भवेत्युक्त्वा मूषिक एव कृतः। अतो ऽहं ब्रवीमि।

नीचः श्लाघ्यपदं प्राप्य स्वामिनं लोप्तुमिच्छति ।
मूषिको व्याघ्रतां प्राप्य मुनिं हन्तुं गतो यथा ॥

---

XVIII.

अस्ति मालवविषये पद्मगर्भाभिधानं सरः । तत्रैको वृद्ध-
बकः सामर्थ्यहीनस्तथोद्विग्नमिवात्मानं दर्शयित्वा स्थितः । स
5 च केन चित्कुलीरेण दूरादेव पृष्टः । किमिति भवानाहारपरि-
त्यागेन तिष्ठति । बकेनोक्तम् । मत्स्या मम जीवनहेतवः ।
ते चात्रावश्यमेव कैवर्तैर्व्यापादयितव्या इति नगरोपान्ते पर्या-
लोचना मयाकर्णिता । तदितो वर्तनाभावादस्मन्मरणमुपस्थि-
तम् । इति ज्ञात्वाहमाहारे ऽपि मन्दादरः कृतः । तच्छ्रुत्वा स-
10 र्वैर्मत्स्यैरालोचितम् । इह समये तावदुपकारक एवायमुपल-
क्ष्यते ऽस्माकम् । तदयमेव यथाकर्तव्यं पृच्छ्यताम् । तथा
चोक्तम् ।

उपकर्त्रारिणा संधिर्न मित्रेणापकारिणा ।
उपकारापकारौ हि लक्ष्यं लक्षणमेतयोः ॥

15 मत्स्या ऊचुः । भो बक । अस्माकं कुत्र रक्षणोपायः । बको ब्रू-
ते । अस्ति रक्षणहेतुर्जलाशयान्तरम् । तत्राहमेकैकशो युष्मान्न-
यामि । मत्स्यैरपि भयादुक्तम् । एवमस्तु । ततो ऽसौ दुष्टबक-
स्तान्मत्स्यानेकैकान्नीत्वा कस्मिंश्चिद्देशे खादित्वा पुनरागत्य व-
दति । ते मया जलाशयान्तरे स्थापिताः । अनन्तरं कुलीरस्त-
20 मुवाच । भो बक । मामपि तत्र नय । ततो बको ऽप्यपूर्वकु-
लीरमांसार्थी सादरं तं नीत्वा स्थले धृतवान् । कुलीरो ऽपि

मत्स्यकङ्कालाकीर्णां भूमिं दृष्ट्वाचिन्तयत् । हा हतो ऽस्मि म-
न्दभाग्यः । भवतु । इदानीं समयोचितं व्यवहरामि । यतः ।

तावद्भयात्तु भेतव्यं यावद्भयमनागतम् ।
आगतं तु भयं दृष्ट्वा प्रहर्तव्यमभीतवत् ॥

5 अपरं च । अयुद्धे हि यदा पश्येन्न किं चिद्धितमात्मनः ।
युध्यमानस्तदा प्राज्ञो म्रियते रिपुणा सह ॥

इत्यालोच्य स कुलीरस्तस्य बकस्य ग्रीवां चिच्छेद । स बकः
पञ्चत्वं गतः । अतो ऽहं ब्रवीमि ।

भक्षयित्वा बहून्मत्स्यानुत्तमाधममध्यमान् ।
10 अतिलौल्याद्बकः कश्चिन्मृतः कर्कटकग्रहात् ॥

---

XIX.

अस्ति देवीकोट्टनगरे देवशर्मा नाम ब्राह्मणः । तेन विषु-
वत्संक्रान्तौ सक्तुपूर्णशरावः प्राप्तः । ततस्तमादायासौ भा-
ण्डपूर्णकुम्भकारमण्डपिकैकदेशे शय्यानिक्षिप्तदेहः सन्नात्राव-
चिन्तयत् । यद्यहमिमं सक्तुशरावं विक्रीय दश कपर्दकान्प्रा-
15 प्नोमि तदा तैरिह समये शरावांस्ततो घटादीनुपक्रीय विक्री-
यानेकधा वृद्धैर्धनैः पुनः पुनः पूगवस्त्रादिकमुपक्रीय लक्षसं-
ख्यानि धनान्युत्पाद्य विवाहचतुष्टयं करोमि। ततस्तासु पत्नीषु
याधिकरूपवती तस्यामधिकानुरागं करोमि । अनन्तरं जाते-
र्ष्यास्तत्सपत्न्यो यदा द्वंद्वं कुर्वन्ति तदा कोपाकुलो ऽहं ताः
20 पत्नीर्लगुडेनेत्थं ताडयामि । इत्यभिधायोत्थाय तेन लगुडः
क्षिप्तः । अतः सक्तुशरावश्चूर्णितो भाण्डानि च बहूनि भग्ना-

नि। ततो भाण्डभङ्गशब्देनागतकुम्भकारेण तद्दृष्ट्वा स ब्राह्मणस्तिरस्कृतो मण्डपिकागर्भाद्बहिष्कृतः। अतो ऽहं ब्रवीमि।

अनागतवतीं चिन्तां कृत्वा यस्तु प्रहृष्यति।
स तिरस्कारमाप्नोति भग्नभाण्डो द्विजो यथा॥

---

XX.

5 अस्ति गौतमारण्ये प्रस्तुतयज्ञः कश्चिद्ब्राह्मणः। स च यज्ञार्थं ग्रामान्तराच्छागमुपक्रीय स्कन्धे कृत्वा गच्छन्धूर्तत्रयेणावलोकितः। ततस्ते धूर्ता यद्येष च्छागः केनाप्युपायेन प्राप्य खाद्यते तदा मतिप्रकर्षो भवतीत्यालोच्य प्रान्तरे वृक्षत्रयतले ब्राह्मणस्य वर्त्मन्युपविश्य स्थिताः। तत्रैकेन धूर्तेन स ब्राह्मणो
10 गच्छन्नभिहितः। भो ब्राह्मण। किमिति त्वया कुक्कुरः स्कन्धेनोह्यते। ब्राह्मणो ब्रूते। नायं श्वा। यज्ञच्छागो ऽयं। अनन्तरं पुनर्द्वितीयेन क्रोशमात्रावस्थितेन तदेवोक्तम्। तदाकर्ण्य ब्राह्मणस्तं छागं भूमौ निधाय मुहुर्मुहुर्निरीक्ष्य पुनः स्कन्धे कृत्वा दोलायमानमतिश्चलितः। तदनन्तरं पुनर्गच्छन्स ब्राह्मण-
15 स्तृतीयेन धूर्तेनोक्तः। भो ब्राह्मण। किमिति कुक्कुरं स्कन्धेन भवान्वहति। तदाकर्ण्य निश्चितमेवायं कुक्कुर इति मत्वा छागं त्यक्त्वा स्नात्वा स्वगृहं ययौ। स च्छागो तैर्धूर्तैर्नीत्वा भक्षितः। अतो ऽहं ब्रवीमि।

आत्मौपम्येन यो वेत्ति दुर्जनं सत्यवादिनम्।
20 स तथा वञ्च्यते धूर्तैर्ब्राह्मणश्छागतो यथा॥

---

XXI.

अस्त्युज्जयिन्यां माठरो नाम ब्राह्मणः। तस्य ब्राह्मणी बालापत्यस्य रक्षार्थं ब्राह्मणमवस्थाप्य स्नातुं गता। अथ ब्राह्मणस्य कृते राज्ञः श्राद्धं दातुमाह्वानमागतम्। तच्छ्रुत्वा ब्राह्मणः सहजदारिद्र्यादचिन्तयत्। यदि सत्वरं न गच्छामि तदान्यः क-
5 श्चिच्छ्राद्धं ग्रहीष्यति। उक्तं च।

आदानस्य प्रदानस्य कर्तव्यस्य च कर्मणः।
क्षिप्रमक्रियमाणस्य कालः पिबति तद्रसम्॥

किं तु बालकस्यात्र रक्षको नास्ति। तत्किं करोमि। यातु। चिरकालपालितमिमं पुत्रनिर्विशेषं नकुलं बालकरक्षार्थम-
10 वस्थाप्य गच्छामि। तथा कृत्वा स तत्र गतः। ततस्तेन नकुलेन बालकसमीपमागच्छता कृष्णसर्पो दृष्टो व्यापादितश्च। अथासौ नकुलो ब्राह्मणमायान्तमवलोक्य रक्तविलिप्तमुखपादः सत्वरमुपागम्य तस्य चरणयोर्लुलोठ। ततो ऽसौ ब्राह्मणस्तं तथाविधं दृष्ट्वा मम पुत्रो ऽनेन भक्षित इत्यवधार्य व्या-
15 पादितवान्। अनन्तरं यावदसावुपसृत्य पश्यति ब्राह्मणस्तावद्बालकः सुस्थः सर्पश्च व्यापादितस्तिष्ठति। ततस्तमुपकारकमेव नकुलं निरूप्य विभावितकृत्यः संतप्तचेताः स परं विषादमगमत्। अतो ऽहं ब्रवीमि।

यो ऽर्थतत्त्वमविज्ञाय क्रोधस्यैव वशं गतः।
20 स तथा तप्यते मूढो ब्राह्मणो नकुलाद्यथा॥

## ॥ अथ कथासरित्सागरः ॥

### XXII.

अत्रान्तरे स राजापि पुत्रकः सत्यसंगरः ।
विवेश विन्ध्यकान्तारं विरक्तः स्वेषु बन्धुषु ॥
भ्रमन्नवाप तत्रासौ बाहुयुद्धैकतत्परौ ।
5 पुरुषौ द्वौ ततस्तौ स पृष्टवान्कौ युवामिति ॥
मयासुरसुतावावां तदीयं चास्ति नौ धनम् ।
इदं भाजनमेषा च यष्टिरेते च पादुके ॥
तन्निमित्तेन युद्धं नौ यो बली स हरेदिति ।
एतत्तद्वचनं श्रुत्वा हसन्प्रोवाच पुत्रकः ॥
10 कियदेतद्धनं पुंसस्ततस्तौ समवोचताम् ।
पादुके परिधायैते खेचरत्वमवाप्यते ॥
यष्ट्या यल्लिख्यते किं चित्सत्यं संपद्यते हि तत् ।
भाजने यो य आहारश्चिन्त्यते स स तिष्ठति ॥
तच्छ्रुत्वा पुत्रको ऽवादीत्किं युद्धेनास्त्वयं पणः ।
15 धावन्बलाधिको यः स्यात्स एवैतद्धरेदिति ॥
एवमस्त्विति तौ मूढौ धावितौ सो ऽपि पादुके ।
अध्यास्योदपतद्व्योम गृहीत्वा यष्टिभाजने ॥
अथ दूरं क्षणाद्गत्वा ददर्श नगरीं शुभाम् ।
आकर्षिकाख्यां तस्यां च नभसो ऽवततार सः ॥

---

XXIII.

अर्थैः संचयवानर्थान्प्राप्नोति कियदद्भुतम् ।
मया पुनर्विनैवार्थं लक्ष्मीरासादिता पुरा ॥
गर्भस्थस्यैव मे पूर्वं पिता पञ्चत्वमागतः ।
मन्मातुश्च तदा पापैर्गोत्रजैः सकलं हृतम् ॥
5 ततः सा तद्भयाद्गत्वा रक्षन्ती गर्भमात्मनः ।
तस्थौ कुमारदत्तस्य पितृमित्रस्य वेश्मनि ॥
तत्र तस्याश्च जातो ऽहं साध्व्या वृत्तिनिबन्धनम् ।
ततश्चावर्धयत्सा मां कृच्छ्रकर्माणि कुर्वती ॥
उपाध्यायमथाभ्यर्थ्य तया किं चन दीनया ।
10 क्रमेण शिक्षितश्चाहं लिपिं गणितमेव च ॥
वणिक्पुत्रो ऽसि तत्पुत्र वाणिज्यं कुरु सांप्रतम् ।
विशाखिलाख्यो देशे ऽस्मिन्वणिक्चास्ति महाधनः ॥
दरिद्राणां कुलीनानां भाण्डमूल्यं ददाति सः ।
गच्छ याचस्व तं मूल्यमिति माताब्रवीच्च माम् ॥
15 ततो ऽहमगमं तस्य सकाशं सो ऽपि तत्क्षणम् ।
इत्यवोचत्क्रुधा कं चिद्वणिक्पुत्रं विशाखिलः ॥
मूषको दृश्यते यो ऽयं गतप्राणो ऽत्र भूतले ।
एतेनापि हि पण्येन कुशलो धनमर्जयेत् ॥
दत्तास्तव पुनः पाप दीनारा बहवो मया ।
20 दूरे तिष्ठतु तद्वृद्धिस्त्वया ते ऽपि न रक्षिताः ॥
तच्छ्रुत्वा सहसैवाहं तमवोचं विशाखिलम् ।
गृहीतो ऽयं मया त्वत्तो भाण्डमूल्याय मूषकः ॥

इत्युक्त्वा मूषकं हस्ते गृहीत्वा संपुटे च तम् ।
लिखित्वास्य गतो ऽभूवमहं सो ऽप्यहसद्वणिक् ॥
चणकाञ्जलियुग्मेन मूल्येन स च मूषकः ।
मार्जारस्य कृते दत्तः कस्य चिद्वणिजो मया ॥
5 कृत्वा तांश्चणकान्पिष्टान्गृहीत्वा जलकुम्भिकाम् ।
अतिष्ठं चत्वरे गत्वा छायायां नगराद्बहिः ॥
तत्र श्रान्तागतायाम्भः शीतलं चणकांश्च तान् ।
काष्ठभारिकसंघाय सप्रश्रयमदामहम् ॥
एकैकः काष्ठिकः प्रीत्या काष्ठे द्वे द्वे ददौ मम ।
10 विक्रीतवानहं तानि नीत्वा काष्ठानि चापणे ॥
ततः स्तोकेन मूल्येन क्रीत्वा तांश्चणकांस्ततः ।
तथैव काष्ठिकेभ्यो ऽहमन्येद्युः काष्ठमाहरम् ॥
एवं प्रतिदिनं कृत्वा प्राप्य मूल्यं क्रमान्मया ।
काष्ठिकेभ्यो ऽखिलं दारु क्रीतं तेभ्यो दिनत्रयम् ॥
15 अकस्मादथ संजाते काष्ठच्छेदे ऽतिवृष्टिभिः ।
मया तद्दारु विक्रीतं पणानां बहुभिः शतैः ॥
तेनैव विपणीं कृत्वा धनेन निजकौशलात् ।
कुर्वन्वाणिज्यं क्रमशः संपन्नो ऽस्मि महाधनः ॥
सौवर्णो मूषकः कृत्वा मया तस्मै समर्पितः ।
20 विशाखिलाय सो ऽपि स्वां कन्यां मह्यमदात्ततः ॥
अत एव च लोके ऽहं प्रसिद्धो मूषकाख्यया ।
एवं लक्ष्मीरियं प्राप्ता निर्धनेन सता मया ॥

---

XXIV.

तथा च पूर्वं राजाभूत्तपस्वी करुणापरः ।
दाता धीरः शिबिर्नाम सर्वसत्त्वाभयप्रदः ॥
तं वञ्चयितुमिन्द्रो ऽथ कृत्वा श्येनवपुः स्वयम् ।
मायाकपोतवपुषं धर्ममन्वपतद्द्रुतम् ॥
5 कपोतः स भयाद्गत्वा शिबेरङ्कमशिश्रियत् ।
मनुष्यवाचा श्येनो ऽथ स तं राजानमब्रवीत् ॥
राजन्भक्ष्यमिदं मुञ्च कपोतं क्षुधितस्य मे ।
अन्यथा मां मृतं विद्धि कस्ते धर्मस्ततो भवेत् ॥
ततः शिबिरुवाचैनमेष मे शरणागतः ।
10 अत्याज्यस्तद्ददाम्यन्यन्मांसमेतत्समं तव ॥
श्येनो जगाद यद्येवमात्ममांसं प्रयच्छ मे ।
तथेति तत्प्रहृष्टः सन्स राजा प्रत्यपद्यत ॥
यथा यथा च मांसं स्वमुत्कृत्यारोपयन्नृपः ।
तथा तथा तुलायां स कपोतो ऽभ्यधिको ऽभवत् ॥
15 ततः शरीरं सकलं तुलां राजाध्यरोपयत् ।
साधु साधु समं त्वेतद्दिव्या वागुदभूत्ततः ॥
इन्द्रधर्मौ ततस्त्यक्त्वा रूपं श्येनकपोतयोः ।
तुष्टावक्षतदेहं तं राजानं चक्रतुः शिबिम् ॥
दत्त्वा चास्मै वरानन्यांस्तावन्तर्धानमीयतुः ॥

---

XXV.

20 पुराभूद्गौतमो नाम त्रिकालज्ञो महामुनिः ।

अहल्येति च तस्यासीद्भार्या रूपजिताप्सराः ॥
एकदा रूपलुब्धस्तामिन्द्रः प्रार्थितवान्रहः ।
प्रभूणां हि विभूत्यन्धा धावत्यविषये मतिः ॥
सानुमेने च तं मूढा वृषस्यन्ती शचीपतिम् ।
5 तच्च प्रभावतो बुद्ध्वा तत्रागाद्गौतमो मुनिः ॥
मार्जाररूपं चक्रे च भयादिन्द्रोऽपि तत्क्षणम् ।
कः स्थितोऽत्रेति सोऽपृच्छदहल्यामथ गौतमः ॥
एसो ठिओ खु मज्जाओ इत्यपभ्रष्टवक्रया ।
गिरा सत्यानुरोधिन्या सा तं प्रत्यब्रवीत्पतिम् ॥
10 सत्यं त्वज्जार इत्युक्त्वा विहसन्स ततो मुनिः ।
सत्यानुरोधक्लृप्तान्तं शापं तस्यामपातयत् ॥
पापशीले शिलाभावं भूरिकालमवाप्नुहि ।
आ वनान्तरसंचारिराघवालोकनादिति ॥
दत्तशापो यथाकामं तपसे स मुनिर्ययौ ।
15 अहल्यापि शिलाभावं दारुणं प्रत्यपद्यत ॥

---

XXVI.

ततः कदा चिदध्यास्त वसन्तसमयोत्सवे ।
देवीकृतं तदुद्यानं स राजा सातवाहनः ॥
विहरन्स चिरं तत्र महेन्द्र इव नन्दने ।
वापीजलेऽवतीर्णोऽभूत्क्रीडितुं कामिनीसखः ॥
20 असिञ्चत्तत्र दयिताः सहेलं करवारिभिः ।
असिच्यत स ताभिश्च वशाभिरिव वारणः ॥

अथैका तस्य महिषी राज्ञः स्तनभरालसा ।
शिरीषसुकुमाराङ्गी क्रीडन्ती श्रममभ्यगात् ॥
सा जलैरभिषिञ्चन्तं राजानमसहा सती ।
अब्रवीन्मोदकैर्देव परिताडय मामिति ॥
5 तच्छ्रुत्वा मोदकान्राजा द्रुतमानाययत्तदा ।
ततो विहस्य सा राज्ञी पुनरेवमभाषत ॥
राजन्नवसरः को ऽत्र मोदकानां जलान्तरे ।
उदकैः सिञ्च मा त्वं मामित्युक्तं हि मया तव ॥
संधिमात्रं न जानासि माशब्दोदकशब्दयोः ।
10 न च प्रकरणं वेत्सि मूर्खस्त्वं कथमीदृशः ॥
इत्युक्तः स तया राज्ञ्या शब्दशास्त्रविदा नृपः ।
परिवारे हसत्यन्तर्लज्जाक्रान्तो झटित्यभूत् ॥
परित्यक्तजलक्रीडो वीतदर्पश्च तत्क्षणम् ।
जातावमानो निर्लक्ष्यः प्राविशन्निजमन्दिरम् ॥
15 ततश्चिन्तापरो मुह्यन्नाहारादिपराङ्मुखः ।
चित्रस्थ इव पृष्टो ऽपि नैव किं चिदभाषत ॥
पाण्डित्यं शरणं वा मे मृत्युर्वेति विचिन्तयन् ।
शयनीयपरिन्यस्तगात्रः संतापवानभूत् ॥
अकस्मादथ राज्ञस्तां दृष्ट्वावस्थां तथाविधाम् ।
20 किमेतदिति संभ्रान्तः सर्वः परिजनो ऽभवत् ॥
ततो ऽहं शर्ववर्मा च ज्ञातवन्तौ क्रमेण ताम् ।
अत्रान्तरे च स प्रायः पर्यहीयत वासरः ॥
प्रातरावामगच्छाव वासवेश्म महीपतेः ॥

तत्र सर्वस्य रुद्धे ऽपि प्रवेशे कथमप्यहम् ।
प्राविशं मम पश्चाच्च शर्ववर्मा लघुक्रमम् ॥
उपविश्याथ निकटे विज्ञप्तः स मया नृपः ।
अकारणं कथं देव वर्तसे विमना इति ॥
5 तच्छ्रुत्वापि तथैवासीत्स तूष्णीं सातवाहनः ।
शर्ववर्मा ततश्चेदमद्भुतं वाक्यमब्रवीत् ॥
श्रुतिमन्तं मां कुर्वीति प्रागुक्तं देव मे त्वया ।
तेनाहं कृतवानद्य स्वप्नमाणवकं निशि ॥
स्वप्ने ततो मया दृष्टं नभसश्च्युतमम्बुजम् ।
10 तच्च दिव्येन केनापि कुमारेण विकासितम् ॥
ततश्च निर्गता तस्माद्दिव्या स्त्री धवलाम्बरा ।
तव देव मुखं सा च प्रविष्टा समनन्तरम् ॥
इयद्दृष्ट्वा प्रबुद्धो ऽस्मि सा च मन्ये सरस्वती ।
देवस्य वदने साक्षात्संप्रविष्टा न संशयः ॥
15 एवं निवेदितस्वप्ने शर्ववर्मणि तत्क्षणम् ।
मामस्तमौनः साकूतमवदत्सातवाहनः ॥
शिक्ष्यमाणः प्रयत्नेन कालेन कियता पुमान् ।
अधिगच्छति पाण्डित्यमेतन्मे कथ्यतां त्वया ॥
मम तेन विना ह्येषा लक्ष्मीर्न प्रतिभासते ।
20 विभवैः किं नु मूर्खस्य काष्ठस्याभरणैरिव ॥
ततो ऽहमवदं राजन्वर्षैर्द्वादशभिः सदा ।
ज्ञायते सर्वविद्यानां मुखं व्याकरणं नरैः ॥
अहं तु शिक्षयामि त्वां वर्षषट्केन तद्विभो ।

श्रुत्वैतत्सहसा सेर्ष्यं शर्ववर्मा किलावदत् ॥
सुखोचितो जनः क्लेशं कथं कुर्यादियच्चिरम् ।
तदहं मासषट्केन देव त्वां शिक्षयामि तत् ॥
श्रुत्वैवैतदसंभाव्यं तमवोचमहं रुषा ।
5 षड्भिर्मासैस्त्वया देवः शिक्षितश्चेत्ततो मया ॥
संस्कृतं प्राकृतं तद्वद्देशभाषा च सर्वदा ।
भाषात्रयमिदं त्यक्तं यन्मनुष्येषु संभवेत् ॥
शर्ववर्मा ततोऽवादीन्न चेदेवं करोम्यहम् ।
द्वादशाब्दान्वहाम्येष शिरसा तव पादुके ॥
10 इत्युक्त्वा निर्गते तस्मिन्नहमप्यगमं गृहम् ।
राजाप्युभयतः सिद्धिं मत्वा शस्तो बभूव सः ॥
शर्ववर्मा च वीहस्तः प्रतिज्ञां तां सुदुस्तराम् ।
पश्यन्सानुशयः सर्वं स्वभार्यायै शशंस तत् ॥
सापि तं दुःखितावोचत्संकटेऽस्मिंस्तव प्रभो ।
15 विना स्वामिकुमारेण गतिरन्या न दृश्यते ॥
तथेति निश्चयं कृत्वा पश्चिमे प्रहरे निशि ।
शर्ववर्मा निराहारस्तत्रैव प्रस्थितोऽभवत् ॥
सोऽपि वातैकभक्षः सन्कृतमौनः सुनिश्चयः ।
प्राप स्वामिकुमारस्य शर्ववर्मान्तिकं क्रमात् ॥
20 शरीरनिरपेक्षेण तपसा तत्र तोषितः ।
प्रसादमकरोत्तस्य कार्त्तिकेयो यथेप्सितम् ॥
आगत्य शर्ववर्माथ कुमारवरसिद्धिमान् ।
चिन्तितोपस्थिता राज्ञे सर्वा विद्याः प्रदत्तवान् ॥

प्रादुरासंश्च तास्तस्य सातवाहनभूपतेः ।
तत्क्षणं किं न कुर्याद्धि प्रसादः पारमेश्वरः ॥

---

XXVII.

एवं गुणाढ्यवचसा साथ सप्तकथामयी ।
स्वभाषया कथा दिव्या कथिता काणभूतिना ॥
5 तथैव च गुणाढ्येन पैशाच्या भाषया तया ।
निबद्धा सप्तभिर्वर्षैर्ग्रन्थलक्षाणि सप्त सा ॥
मैतां विद्याधरा हार्षुरिति तामात्मशोणितैः ।
अटव्यां मष्यभावाच्च लिलेख स महाकविः ॥
तथा च श्रोतुमायातैः सिद्धविद्याधरादिभिः ।
10 निरन्तरमभूत्तत्र सवितानमिवाम्बरम् ॥
गुणाढ्येन निबद्धां च तां दृष्ट्वैव महाकथाम् ।
जगाम मुक्तशापः सन्काणभूतिर्निजां गतिम् ॥
पिशाचा ये ऽपि तत्रासन्नन्ये तत्सहचारिणः ।
ते ऽपि प्रापुर्दिवं सर्वे दिव्यामाकर्ण्य तां कथाम् ॥
15 प्रतिष्ठां प्रापणीयैषा पृथिव्यां मे बृहत्कथा ।
अयमर्थो ऽपि मे देव्या शापान्तोक्तावुदीरितः ॥
तत्कथं प्रापयाम्येनां कस्मै तावत्समर्पये ।
इत्येवाचिन्तयत्तत्र स गुणाढ्यो महाकविः ॥
अथैको गुणदेवाख्यो नन्दिदेवाभिधः परः ।
20 तमूचतुरुपाध्यायं शिष्यावनुगतावुभौ ॥

तत्काव्यस्यार्पणस्थानमेकः श्रीसातवाहनः ।
रसिको हि वहेत्काव्यं पुष्पामोदमिवानिलः ॥
एवमस्त्विति तौ शिष्यावन्तिकं तस्य भूपतेः ।
प्राहिणोत्पुस्तकं दत्त्वा गुणाढ्यो गुणशालिनौ ॥
5 स्वयं च गत्वा तत्रैव प्रतिष्ठाने पुराद्बहिः ।
कृतसंकेत उद्याने तस्थौ देवीविनिर्मिते ॥
तच्छिष्याभ्यां च गत्वा तत्सातवाहनभूपतेः ।
गुणाढ्यकृतिरेषेति दर्शितं काव्यपुस्तकम् ॥
पिशाचभाषां तां श्रुत्वा तौ च दृष्ट्वा तदाकृती ।
10 विद्यामदेन सासूयं स राजैवमभाषत ॥
प्रमाणं सप्त लक्षाणि पैशाचं नीरसं वचः ।
शोणितेनाक्षरन्यासो धिक्पिशाचकथामिमाम् ॥
ततः पुस्तकमादाय गत्वा ताभ्यां यथागतम् ।
शिष्याभ्यां तद्गुणाढ्याय यथावृत्तमकथ्यत ॥
15 गुणाढ्योऽपि तदाकर्ण्य सद्यः खेदवशोऽभवत् ।
तत्त्वज्ञेन कृतावज्ञः को नामान्तर्न तप्यते ॥
सशिष्यश्च ततो गत्वा नातिदूरं शिलोच्चयम् ।
विविक्तरम्यभूभागमग्निकुण्डं व्यधात्पुरः ॥
तत्राग्नौ पत्रमेकैकं शिष्याभ्यां साश्रु वीक्षितः ।
20 वाचयित्वा स चिक्षेप श्रावयन्मृगपक्षिणः ॥
नरवाहनदत्तस्य चरितं शिष्ययोः कृते ।
ग्रन्थलक्षं कथामेकां वर्जयित्वा तदीप्सिताम् ॥
तस्मिंश्च तां कथां दिव्यां पठत्यपि दहत्यपि ।

परित्यक्ततृणाहाराः शृण्वन्तः साश्रुलोचनाः ॥
आसन्नभ्येत्य तत्रैव निश्चला बद्धमण्डलाः ।
निखिलाः खलु सारङ्गवराहमहिषादयः ॥
अत्रान्तरे स राजाभूदस्वस्थः सातवाहनः ।
5 दोषं चास्यावदन्वैद्याः शुष्कमांसोपभोगजम् ॥
आक्षिप्तास्तन्निमित्तं च सूपकारा बभाषिरे ।
अस्माकमीदृशं मांसं ददते लुब्धका इति ॥
पृष्टाश्च लुब्धका ऊचुर्नातिदूरे गिरावितः ।
पठित्वा पत्त्रमेकैकं को ऽप्यग्नौ क्षिपति द्विजः ॥
10 तत्समेत्य निराहाराः शृण्वन्ति प्राणिनो ऽखिलाः ।
नान्यतो यान्ति तेनैषां शुष्कं मांसमिदं क्षुधा ॥
इति व्याधवचः श्रुत्वा कृत्वा तानेव चाग्रतः ।
स्वयं स कौतुकाद्राजा गुणाढ्यस्यान्तिकं ययौ ॥
ददर्श तं समाकीर्णं जटाभिर्वनवासतः ।
15 प्रशान्तशेषशापाग्निधूमिकाभिरिवाभितः ॥
अथैनं प्रत्यभिज्ञाय सबाष्पमृगमध्यगम् ।
नमस्कृत्य च पप्रच्छ तं वृत्तान्तं महीपतिः ॥
सो ऽपि स्वं पुष्पदन्तस्य राज्ञे शापादिचेष्टितम् ।
ज्ञानी कथावतारं तमाचख्यौ भूतभाषया ॥
20 ततो गणावतारं तं मत्वा पादानतो नृपः ।
ययाचे तां कथां तस्माद्दिव्यां हरमुखोद्गताम् ॥
अथोवाच स तं भूपं गुणाढ्यः सातवाहनम् ।
राजन्षड्ग्रन्थलक्षाणि मया दग्धानि षट्कथाः ॥

लक्षमेकमिदं त्वस्ति कथैका सैव गृह्यताम् ।
मच्छिष्यौ तव चाचैतौ व्याख्यातारौ भविष्यतः ॥
इत्युक्त्वा नृपमामन्त्र्य त्यक्त्वा योगेन तां तनुम् ।
गुणाढ्यः शापनिर्मुक्तः प्राप दिव्यं निजं पदम् ॥
5 अथ तां गुणाढ्यदत्तामादाय कथां बृहत्कथां नाम्ना ।
नृपतिरगान्निजनगरं नरवाहनदत्तचरितमयीम् ॥
गुणदेवनन्दिदेवौ तत्र च तौ तत्कथाकवेः शिष्यौ ।
क्षितिकनकवस्त्रवाहनभवनधनैः संविभेजे सः ॥
ताभ्यां सह च कथां तामाश्वास्य स सातवाहनस्तस्याः ।
10 तद्भाषयावतारं वक्तुं चक्रे कथापीठम् ॥
सा च चित्ररसनिर्भरा कथा विस्मृतामरकथा कुतूहलात् ।
तद्विधाय नगरे निरन्तरां ख्यातिमत्र भुवनत्रये गता ॥
॥ इति कथासरित्सागरे ऽष्टमस्तरङ्गः ॥

---

## XXVIII.

### ॥ अथ मानवधर्मशास्त्रम् ॥

15 आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् ।
अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः ॥५॥ ॥अध्या° १॥
ततः स्वयंभूर्भगवानव्यक्तो व्यञ्जयन्निदम् ।
महाभूतादि वृत्तौजाः प्रादुरासीत्तमोनुदः ॥६॥
यो ऽसावतीन्द्रियग्राह्यः सूक्ष्मो ऽव्यक्तः सनातनः ।
20 सर्वभूतमयो ऽचिन्त्यः स एव स्वयमुद्बभौ ॥७॥

सो ऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः ।
अप एव ससर्जादौ तासु बीजमवासृजत् ॥८॥
तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ।
तस्मिञ्जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ॥९॥
5 आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः ॥१०॥
यत्तत्कारणमव्यक्तं नित्यं सदसदात्मकम् ।
तद्विसृष्टः स पुरुषो लोके ब्रह्मेति कीर्त्यते ॥११॥
तस्मिन्नण्डे स भगवानुषित्वा परिवत्सरम् ।
10 स्वयमेवात्मनो ध्यानात्तदण्डमकरोद्द्विधा ॥१२॥
ताभ्यां स शकलाभ्यां च दिवं भूमिं च निर्ममे ।
मध्ये व्योम दिशश्चाष्टावपां स्थानं च शाश्वतम् ॥१३॥
अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम् ।
दुदोह यज्ञसिद्ध्यर्थमृग्यजुःसामलक्षणम् ॥२३॥
15 लोकानां तु विवृद्ध्यर्थं मुखबाहूरुपादतः ।
ब्राह्मणं क्षत्रियं वैश्यं शूद्रं च निरवर्तयत् ॥३१॥
अहोरात्रे विभजते सूर्यो मानुषदैविके ।
रात्रिः स्वप्नाय भूतानां चेष्टायै कर्मणामहः ॥६५॥
पित्र्ये रात्र्यहनी मासः प्रविभागस्तु पक्षयोः ।
20 कर्मचेष्टास्वहः कृष्णः शुक्लः स्वप्नाय शर्वरी ॥६६॥
दैवे रात्र्यहनी वर्षं प्रविभागस्तयोः पुनः ।
अहस्तत्रोदगयनं रात्रिः स्याद्दक्षिणायनम् ॥६७॥
ब्राह्मस्य तु क्षपाहस्य यत्प्रमाणं समासतः ।

एकैकशो युगानां तु क्रमशस्तन्निबोधत ॥६८॥
चत्वार्याहुः सहस्राणि वर्षाणां तु कृतं युगम् ।
तस्य तावच्छती संध्या संध्यांशश्च तथाविधः ॥६९॥
इतरेषु ससंध्येषु ससंध्यांशेषु च त्रिषु ।
5 एकापायेन वर्तन्ते सहस्राणि शतानि च ॥७०॥
यदेतत्परिसंख्यातमादावेव चतुर्युगम् ।
एतद्द्वादशसाहस्रं देवानां युगमुच्यते ॥७१॥
दैविकानां युगानां तु सहस्रं परिसंख्यया ।
ब्राह्ममेकमहर्ज्ञेयं तावती रात्रिरेव च ॥७२॥
10 भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः ।
बुद्धिमत्सु नराः श्रेष्ठा नरेषु ब्राह्मणाः स्मृताः ॥९६॥
ब्राह्मणेषु च विद्वांसो विद्वत्सु कृतबुद्धयः ।
कृतबुद्धिषु कर्तारः कर्तृषु ब्रह्मवेदिनः ॥९७॥
वेदो ऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ।
15 आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ॥६॥ ॥अध्या॰ २॥
श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन्हि मानवः ।
इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम् ॥९॥
श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः ।
ते सर्वार्थेष्वमीमांस्ये ताभ्यां धर्मो हि निर्बभौ ॥१०॥
20 यो ऽवमन्येत ते मूले हेतुशास्त्राश्रयाद्द्विजः ।
स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दकः ॥११॥
वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम् ॥१२॥

वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम् ।
कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च ॥२६॥
गार्भैर्होमैर्जातकर्मचौडमौञ्जीनिबन्धनैः ।
बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते ॥२७॥
5 स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः ।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ॥२८॥
प्राङ्नाभिवर्धनात्पुंसो जातकर्म विधीयते ।
मन्त्रवत्प्राशनं चास्य हिरण्यमधुसर्पिषाम् ॥२९॥
नामधेयं दशम्यां तु द्वादश्यां वास्य कारयेत् ।
10 पुण्ये तिथौ मुहूर्ते वा नक्षत्रे वा गुणान्विते ॥३०॥
मङ्गल्यं ब्राह्मणस्य स्यात्क्षत्रियस्य बलान्वितम् ।
वैश्यस्य धनसंयुक्तं शूद्रस्य तु जुगुप्सितम् ॥३१॥
शर्मवद्ब्राह्मणस्य स्याद्राज्ञो रक्षासमन्वितम् ।
वैश्यस्य पुष्टिसंयुक्तं शूद्रस्य प्रैष्यसंयुतम् ॥३२॥
15 स्त्रीणां सुखोद्यमक्रूरं विस्पष्टार्थं मनोहरम् ।
मङ्गल्यं दीर्घवर्णान्तमाशीर्वादाभिधानवत् ॥३३॥
चतुर्थे मासि कर्तव्यं शिशोर्निष्क्रमणं गृहात् ।
षष्ठे ऽन्नप्राशनं मासि यद्वेष्टं मङ्गलं कुले ॥३४॥
चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः ।
20 प्रथमे ऽब्दे तृतीये वा कर्तव्यं श्रुतिचोदनात् ॥३५॥
गर्भाष्टमे ऽब्दे कुर्वीत ब्राह्मणस्योपनायनम् ।
गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः ॥३६॥
प्रतिगृह्येप्सितं दण्डमुपस्थाय च भास्करम् ।

प्रदक्षिणं परीत्याग्निं चरेद्भैक्षं यथाविधि ॥४८॥
भवत्पूर्वं चरेद्भैक्षमुपनीतो द्विजोत्तमः ।
भवन्मध्यं तु राजन्यो वैश्यस्तु भवदुत्तरम् ॥४९॥
व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः ।
5 सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन च दक्षिणः ॥७२॥
अध्येष्यमाणं तु गुरुर्नित्यकालमतन्द्रितः ।
अधीष्व भो इति ब्रूयाद्विरामो ऽस्त्विति चारमेत् ॥७३॥
ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा ।
स्रवत्यनोंकृतं पूर्वं परस्ताच्च विशीर्यते ॥७४॥
10 अकारं चाप्युकारं च मकारं च प्रजापतिः ।
वेदत्रयान्निरदुहद्भूर्भुवः स्वरितीति च ॥७६॥
त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत् ।
तदित्यृचो ऽस्याः सावित्र्याः परमेष्ठी प्रजापतिः ॥७७॥
एतदक्षरमेतां च जपन्व्याहृतिपूर्विकाम् ।
15 संध्ययोर्वेदविद्विप्रो वेदपुण्येन युज्यते ॥७८॥
ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति ।
प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते ॥१२०॥
अभिवादनशीलस्य नित्यं वृद्धोपसेविनः ।
चत्वारि तस्य वर्धन्ते आयुर्विद्या यशो बलम् ॥१२१॥
20 अभिवादात्परं विप्रो ज्यायांसमभिवादयन् ।
असौ नामाहमस्मीति स्वं नाम परिकीर्तयेत् ॥१२२॥
नामधेयस्य ये के चिदभिवादं न जानते ।
तान्प्राज्ञो ऽहमिति ब्रूयात्स्त्रियः सर्वास्तथैव च ॥१२३॥

भोःशब्दं कीर्तयेदन्ते स्वस्य नाम्नो ऽभिवादने ।
नाम्नां स्वरूपभावो हि भोभाव ऋषिभिः स्मृतः ॥१२४॥
आयुष्मान्भव सौम्येति वाच्यो विप्रो ऽभिवादने ।
अकारश्चास्य नाम्नो ऽन्ते वाच्यः पूर्वाक्षरः प्लुतः ॥१२५॥
5 यो न वेत्त्यभिवादस्य विप्रः प्रत्यभिवादनम् ।
नाभिवाद्यः स विदुषा यथा शूद्रस्तथैव सः ॥१२६॥
ब्राह्मणं कुशलं पृच्छेत्क्षत्रबन्धुमनामयम् ।
वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च ॥१२७॥
अवाच्यो दीक्षितो नाम्ना यवीयानपि यो भवेत् ।
10 भोभवत्पूर्वकं त्वेनमभिभाषेत धर्मवित् ॥१२८॥
परपत्नी तु या स्त्री स्यादसंबन्धा च योनितः ।
तां ब्रूयाद्भवतीत्येवं सुभगे भगिनीति च ॥१२९॥
मातुलांश्च पितृव्यांश्च श्वशुरानृत्विजो गुरून् ।
असावहमिति ब्रूयात्प्रत्युत्थाय यवीयसः ॥१३०॥
15 ब्राह्मस्य जन्मनः कर्ता स्वधर्मस्य च शासिता ।
बालो ऽपि विप्रो वृद्धस्य पिता भवति धर्मतः ॥१५०॥
अध्यापयामास पितॄञ्छिशुराङ्गिरसः कविः ।
पुत्रका इति होवाच ज्ञानेन परिगृह्य तान् ॥१५१॥
ते तमर्थमपृच्छन्त देवानागतमन्यवः ।
20 देवाश्चैतान्समेत्योचुर्न्याय्यं वः शिशुरुक्तवान् ॥१५२॥
अज्ञो भवति वै बालः पिता भवति मन्त्रदः ।
अज्ञं हि बालमित्याहुः पितेत्येव तु मन्त्रदम् ॥१५३॥
षट्त्रिंशदाब्दिकं चर्यं गुरौ त्रैवेदिकं व्रतम् ।

तदर्धिकं पादिकं वा ग्रहणान्तिकमेव वा ॥१॥ ॥अध्या॰ ३॥
वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम् ।
अविप्लुतब्रह्मचर्यो गृहस्थाश्रममावसेत् ॥२॥
तं प्रतीतं स्वधर्मेण ब्रह्मदायहरं पितुः ।
5 स्रग्विणं तल्प आसीनमर्हयेत्प्रथमं गवा ॥३॥
गुरुणानुमतः स्नात्वा समावृत्तो यथाविधि ।
उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्विताम् ॥४॥
सर्वान्परित्यजेदर्थान्स्वाध्यायस्य विरोधिनः ।
यथा तथाध्यापयंस्तु सा ह्यस्य कृतकृत्यता ॥१७॥ अध्या॰ ४॥
10 कॢप्तकेशनखश्मश्रुर्दान्तः शुक्लाम्बरः शुचिः ।
स्वाध्याये चैव युक्तः स्यान्नित्यमात्महितेषु च ॥३५॥
वैणवीं धारयेद्यष्टिं सोदकं च कमण्डलुम् ।
यज्ञोपवीतं वेदं च शुभे रौक्मे च कुण्डले ॥३६॥
नेक्षेतोद्यन्तमादित्यं नास्तं यान्तं कदा चन ।
15 नोपसृष्टं न वारिस्थं न मध्यं नभसो गतम् ॥३७॥
न लङ्घयेद्वत्सतन्त्रीं न प्रधावेच्च वर्षति ।
न चोदके निरीक्षेत स्वं रूपमिति धारणा ॥३८॥
मृदं गां दैवतं विप्रं घृतं मधु चतुष्पथम् ।
प्रदक्षिणानि कुर्वीत प्रज्ञातांश्च वनस्पतीन् ॥३९॥
20 वाय्वग्निविप्रमादित्यमपः पश्यंस्तथैव गाः ।
न कदा चन कुर्वीत विण्मूत्रस्य विसर्जनम् ॥४८॥
मूत्रोच्चारसमुत्सर्गं दिवा कुर्यादुदङ्मुखः ।
दक्षिणाभिमुखो रात्रौ संध्ययोश्च यथा दिवा ॥५०॥

न वारयेद्गां धयन्तीं न चाचक्षीत कस्य चित् ।
न दिवीन्द्रायुधं दृष्ट्वा कस्य चिद्दर्शयेद्बुधः ॥५९॥
सामध्वनावृग्यजुषी नाधीयीत कदा चन ।
वेदस्याधीत्य वाप्यन्तमारण्यकमधीत्य च ॥१२३॥
5 ऋग्वेदो देवदैवत्यो यजुर्वेदस्तु मानुषः ।
सामवेदः स्मृतः पित्र्यस्तस्मात्तस्याशुचिर्ध्वनिः ॥१२४॥
नाधर्मश्चरितो लोके सद्यः फलति गौरिव ।
शनैरावर्तमानस्तु कर्तुर्मूलानि कृन्तति ॥१७२॥
यदि नात्मनि पुत्रेषु न चेत्पुत्रेषु नप्तृषु ।
10 न त्वेव तु कृतो ऽधर्मः कर्तुर्भवति निष्फलः ॥१७३॥
धर्मं शनैः संचिनुयाद्वल्मीकमिव पुत्तिकाः ।
परलोकसहायार्थं सर्वभूतान्यपीडयन् ॥२३८॥
नामुत्र हि सहायार्थं पिता माता च तिष्ठतः ।
न पुत्रदारं न ज्ञातिर्धर्मस्तिष्ठति केवलः ॥२३९॥
15 एकः प्रजायते जन्तुरेक एव प्रलीयते ।
एको ऽनुभुङ्क्ते सुकृतमेक एव च दुष्कृतम् ॥२४०॥
मृतं शरीरमुत्सृज्य काष्ठलोष्टसमं क्षितौ ।
विमुखा बान्धवा यान्ति धर्मस्तमनुगच्छति ॥२४१॥
तस्माद्धर्मं सहायार्थं नित्यं संचिनुयाच्छनैः ।
20 धर्मेण हि सहायेन तमस्तरति दुस्तरम् ॥२४२॥
प्राणस्यान्नमिदं सर्वं प्रजापतिरकल्पयत् ।
स्थावरं जङ्गमं चैव सर्वं प्राणस्य भोजनम् ॥२८॥ अध्या° ५॥
चराणामन्नमचरा दंष्ट्रिणामप्यदंष्ट्रिणः ।

अहस्ताश्च सहस्तानां शूराणां चैव भीरवः ॥ २९ ॥
कुर्याद्घृतपशुं सङ्गे कुर्यात्पिष्टपशुं तथा ।
न त्वेव तु वृथा हन्तुं पशुमिच्छेत्कदा चन ॥ ३७ ॥
यावन्ति पशुरोमाणि तावत्कृत्वो ह मारणम् ।
5 वृथापशुघ्नः प्राप्नोति प्रेत्य जन्मनि जन्मनि ॥ ३८ ॥
मां स भक्षयितामुत्र यस्य मांसमिहाद्म्यहम् ।
एतन्मांसस्य मांसत्वं प्रवदन्ति मनीषिणः ॥ ५५ ॥
नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषितम् ।
पतिं शुश्रूषते येन तेन स्वर्गे महीयते ॥ १५५ ॥
10 पाणिग्राहस्य साध्वी स्त्री जीवतो वा मृतस्य वा ।
पतिलोकमभीप्सन्ती नाचरेत्किं चिदप्रियम् ॥ १५६ ॥
कामं तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः ।
न तु नामापि गृह्णीयात्पत्यौ प्रेते परस्य तु ॥ १५७ ॥
आसीता मरणात्क्षान्ता नियता ब्रह्मचारिणी ।
15 यो धर्म एकपत्नीनां काङ्क्षन्ती तमनुत्तमम् ॥ १५८ ॥
एवं गृहाश्रमे स्थित्वा विधिवत्स्नातको द्विजः ।
वने वसेत्तु नियतो यथावद्विजितेन्द्रियः ॥ १ ॥ ॥ अध्या० ६ ॥
वसीत चर्म चीरं वा सायं स्नायात्प्रगे तथा ।
जटाश्च बिभृयान्नित्यं श्मश्रुलोमनखानि च ॥ ६ ॥
20 ग्रीष्मे पञ्चतपास्तु स्याद्वर्षास्वभ्रावकाशिकः ।
आर्द्रवासास्तु हेमन्ते क्रमशो वर्धयंस्तपः ॥ २३ ॥
वनेषु तु विहृत्यैवं तृतीयं भागमायुषः ।
चतुर्थमायुषो भागं त्यक्त्वा सङ्गान्परिव्रजेत् ॥ ३३ ॥

आश्रमादाश्रमं गत्वा हुतहोमो जितेन्द्रियः ।
भिक्षाबलिपरिश्रान्तः प्रव्रजन्प्रेत्य वर्धते ॥३४॥
ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा ।
एते गृहस्थप्रभवाश्चत्वारः पृथगाश्रमाः ॥८७॥
5 एकैकं ह्रासयेत्पिण्डं कृष्णे शुक्ले च वर्धयेत् ।
उपस्पृशंस्त्रिषवणमेतच्चान्द्रायणं स्मृतम् ॥२१६॥ अध्या° ११ ॥
एतमेव विधिं कृत्स्नमाचरेद्यवमध्यमे ।
शुक्लपक्षादि नियतश्चरंश्चान्द्रायणं व्रतम् ॥२१७॥
शुभाशुभफलं कर्म मनोवाग्देहसंभवम् ।
10 कर्मजा गतयो नृणामुत्तमाधममध्यमाः ॥३॥ ॥अध्या° १२॥
तस्येह त्रिविधस्यापि त्र्यधिष्ठानस्य देहिनः ।
दशलक्षणयुक्तस्य मनो विद्यात्प्रवर्तकम् ॥४॥
परद्रव्येष्वभिध्यानं मनसानिष्टचिन्तनम् ।
वितथाभिनिवेशश्च त्रिविधं कर्म मानसम् ॥५॥
15 पारुष्यमनृतं चैव पैशुन्यं चापि सर्वशः ।
असंबद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम् ॥६॥
अदत्तानामुपादानं हिंसा चैवाविधानतः ।
परदारोपसेवा च शारीरं त्रिविधं स्मृतम् ॥७॥
मानसं मनसैवायमुपभुङ्क्ते शुभाशुभम् ।
20 वाचा वाचा कृतं कर्म कायेनैव च कायिकम् ॥८॥
शरीरजैः कर्मदोषैर्याति स्थावरतां नरः ।
वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम् ॥९॥
यद्याचरति धर्मं स प्रायशो ऽधर्ममल्पशः ।

तैरेव चावृतो भूतैः स्वर्गे सुखमुपाश्नुते ॥२०॥
यदि तु प्रायशोऽधर्मं सेवते धर्ममल्पशः ।
तैर्भूतैः स परित्यक्तो यामीः प्राप्नोति यातनाः ॥२१॥
यामीस्ता यातनाः प्राप्य स जीवो वीतकल्मषः ।
5 तान्येव पञ्च भूतानि पुनरभ्येति भागशः ॥२२॥
एता दृष्ट्वास्य जीवस्य गतीः स्वेनैव चेतसा ।
धर्मतोऽधर्मतश्चैव धर्मे दध्यात्सदा मनः ॥२३॥
सत्त्वं रजस्तमश्चैव त्रीन्विद्यादात्मनो गुणान् ।
यैर्व्याप्येमान्स्थितो भावान्महान्सर्वानशेषतः ॥२४॥
10 यत्कर्म कृत्वा कुर्वंश्च करिष्यंश्चैव लज्जते ।
तज्ज्ञेयं विदुषा सर्वं तामसं गुणलक्षणम् ॥३५॥
येनास्मिन्कर्मणा लोके ख्यातिमिच्छति पुष्कलाम् ।
न च शोचत्यसंपत्तौ तद्विज्ञेयं तु राजसम् ॥३६॥
यत्सर्वेणेच्छति ज्ञातुं यन्न लज्जति चाचरन् ।
15 येन तुष्यति चात्मास्य तत्सत्त्वगुणलक्षणम् ॥३७॥
तमसो लक्षणं कामो रजसस्त्वर्थ उच्यते ।
सत्त्वस्य लक्षणं धर्मः श्रैष्ठ्यमेषां यथाक्रमम् ॥३८॥
येन यांस्तु गुणेनैषां संसारान्प्रतिपद्यते ।
तान्समासेन वक्ष्यामि सर्वस्यास्य यथाक्रमम् ॥३९॥
20 देवत्वं सात्त्विका यान्ति मनुष्यत्वं च राजसाः ।
तिर्यक्त्वं तामसा नित्यमित्येषा त्रिविधा गतिः ॥४०॥
त्रिविधा त्रिविधैषां तु विज्ञेया गौणिकी गतिः ॥
अधमा मध्यमाग्र्या च कर्मविद्याविशेषतः ॥४१॥

स्थावराः कृमिकीटाश्च मत्स्याः सर्पाः सकच्छपाः ।
पशवश्च मृगाश्चैव जघन्या तामसी गतिः ॥४२॥
हस्तिनश्च तुरंगाश्च शूद्रा म्लेच्छाश्च गर्हिताः ।
सिंहा व्याघ्रा वराहाश्च मध्यमा तामसी गतिः ॥४३॥
5 चारणाश्च सुपर्णाश्च पुरुषाश्चैव दाम्भिकाः ।
रक्षांसि च पिशाचाश्च तामसीषूत्तमा गतिः ॥४४॥
झल्ला मल्ला नटाश्चैव पुरुषाः शस्त्रवृत्तयः ।
द्यूतपानप्रसक्ताश्च जघन्या राजसी गतिः ॥४५॥
राजानः क्षत्रियाश्चैव राज्ञां चैव पुरोहिताः ।
10 वादयुद्धप्रधानाश्च मध्यमा राजसी गतिः ॥४६॥
गन्धर्वा गुह्यका यक्षा विबुधानुचराश्च ये ।
तथैवाप्सरसः सर्वा राजसीषूत्तमा गतिः ॥४७॥
तापसा यतयो विप्रा ये च वैमानिका गणाः ।
नक्षत्राणि च दैत्याश्च प्रथमा सात्त्विकी गतिः ॥४८॥
15 यज्वान ऋषयो देवा वेदा ज्योतींषि वत्सराः ।
पितरश्चैव साध्याश्च द्वितीया सात्त्विकी गतिः ॥४९॥
ब्रह्मा विश्वसृजो धर्मो महानव्यक्त एव च ।
उत्तमां सात्त्विकीमेतां गतिमाहुर्मनीषिणः ॥५०॥
श्वसूकरखरोष्ट्राणां गोऽजाविमृगपक्षिणाम् ।
20 चण्डालपुल्कसानां च ब्रह्महा योनिमृच्छति ॥५५॥
हिंस्रा भवन्ति क्रव्यादाः कृमयोऽभक्ष्यभक्षिणः ।
परस्परादिनः स्तेनाः प्रेता ऽन्यस्त्रीनिषेविणः ॥५९॥
धान्यं हृत्वा भवत्याखुः कांस्यं हंसो जलं प्लवः ।

मधु दंशः पयः काको रसं श्वा नकुलो घृतम् ॥ ६२॥
छुच्छुन्दरिः शुभान्गन्धान्पत्त्रशाकं तु बर्हिणः।
श्वाविल्कृतान्नं विविधमकृतान्नं तु शल्यकः ॥ ६५ ॥
स्त्रियो ऽप्येतेन कल्पेन हृत्वा दोषमवाप्नुयुः।
5 एतेषामेव जन्तूनां भार्यात्वमुपयान्ति ताः ॥ ६९ ॥
वेदाभ्यासस्तपो ज्ञानमिन्द्रियाणां च संयमः।
अहिंसा गुरुसेवा च निःश्रेयसकरं परम् ॥ ८३॥
प्रवृत्तं कर्म संसेव्य देवानामेति साम्यताम्।
निवृत्तं सेवमानस्तु भूतान्यत्येति पञ्च वै ॥ ९०॥
10 या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः।
सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः ॥ ९५॥
उत्पद्यन्ते च्यवन्ते च यान्यतो ऽन्यानि कानि चित्।
तान्यर्वाक्कालिकतया निष्फलान्यनृतानि च ॥ ९६॥
अज्ञेभ्यो ग्रन्थिनः श्रेष्ठा ग्रन्थिभ्यो धारिणो वराः।
15 धारिभ्यो ज्ञानिनः श्रेष्ठा ज्ञानिभ्यो व्यवसायिनः ॥ १०३ ॥

---

XXIX. XXX.

एकोना विंशतिर्नार्यः क्रीडां कर्तुं वने गताः।
विंशतिर्गृहमायाताः शेषो व्याघ्रेण भक्षितः ॥
समादिशत्पिता पुत्रं लिख लेखं ममाज्ञया।
न तेन लिखितो लेखः पितुराज्ञा न खण्डिता ॥

---

## XXXI. RIGVEDA I. 1.

अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् ।
होतारं रत्नधातमम् ॥१॥
अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत ।
स देवाँ एह वक्षति ॥२॥
5 अग्निना रयिमश्नवत्पोषमेव दिवे दिवे ।
यशसं वीरवत्तमम् ॥३॥
अग्ने यं यज्ञमध्वरं विश्वतः परिभूरसि ।
स इद्देवेषु गच्छति ॥४॥
अग्निर्होता कविक्रतुः सत्यश्चित्रश्रवस्तमः ।
10 देवो देवेभिरा गमत् ॥५॥
यदङ्ग दाशुषे त्वमग्ने भद्रं करिष्यसि ।
तवेत्तत्सत्यमङ्गिरः ॥६॥
उप त्वाग्ने दिवे दिवे दोषावस्तर्धिया वयम् ।
नमो भरन्त एमसि ॥७॥
15 राजन्तमध्वराणां गोपामृतस्य दीदिविम् ।
वर्धमानं स्वे दमे ॥८॥
स नः पितेव सूनवेऽग्ने सूपायनो भव ।
सचस्वा नः स्वस्तये ॥९॥

## XXXII. RIGVEDA I. 32

इन्द्रस्य नु वीर्याणि प्र वोचं यानि चकार प्रथमानि वज्री ।

अहन्नहिमन्वपस्ततर्द प्र वक्षणा अभिनत्पर्वतानाम् ॥१॥

अहन्नहिं पर्वते शिश्रियाणं त्वष्टास्मै वज्रं स्वर्यं ततक्ष ।

वाश्रा इव धेनवः स्यन्दमाना अञ्जः समुद्रमव जग्मुरापः ॥२॥

5 वृषायमाणोऽवृणीत सोमं त्रिकद्रुकेष्वपिबत्सुतस्य ।

आ सायकं मघवादत्त वज्रमहन्नेनं प्रथमजामहीनाम् ॥३॥

यदिन्द्राहन्प्रथमजामहीनामान्मायिनाममिनाः प्रोत मायाः ।

आत्सूर्यं जनयन्द्यामुषासं तादीत्ना शत्रुं न किला विवित्से ॥४॥

अहन्वृत्रं वृत्रतरं व्यंसमिन्द्रो वज्रेण महता वधेन ।

10 स्कन्धांसीव कुलिशेना विवृक्णाहिः शयत उपपृक्पृथिव्याः ॥५॥

अयोद्धेव दुर्मद आ हि जुह्वे महावीरं तुविबाधमृजीषम् ।

नातारीदस्य समृतिं वधानां सं रुजानाः पिपिष इन्द्रशत्रुः ॥६॥

अपादहस्तो अपृतन्यदिन्द्रमास्य वज्रमधि सानौ जघान ।

वृष्णो वध्रिः प्रतिमानं बुभूषन्पुरुत्रा वृत्रो अशयद्व्यस्तः ॥७॥

15 नदं न भिन्नममुया शयानं मनो रुहाणा अति यन्त्यापः ।

याश्चिद्वृत्रो महिना पर्यतिष्ठत्तासामहिः पत्सुतःशीर्बभूव ॥८॥

नीचावया अभवद्वृत्रपुत्रेन्द्रो अस्या अव वधर्जभार ।

उत्तरा सूरधरः पुत्र आसीद्दानुः शये सहवत्सा न धेनुः ॥९॥

अतिष्ठन्तीनामनिवेशनानां काष्ठानां मध्ये निहितं शरीरम् ।

20 वृत्रस्य निण्यं वि चरन्त्यापो दीर्घं तम आशयदिन्द्रशत्रुः ॥१०॥

दासपत्नीरहिगोपा अतिष्ठन्निरुद्धा आपः पणिनेव गावः ।

अपां बिलमपिहितं यदासीद्वृत्रं जघन्वाँ अप तद्ववार ॥११॥
अश्व्यो वारो अभवस्तदिन्द्र सृके यत्त्वा प्रत्यहन्देव एकः ।
अजयो गा अजयः शूर सोममवासृजः सर्तवे सप्त सिन्धून् ॥१२॥
नास्मै विद्युन्न तन्यतुः सिषेध न यां मिहमकिरद्ध्रादुनिं च ।
5 इन्द्रश्च यद्युयुधाते अहिश्चोतापरीभ्यो मघवा वि जिग्ये ॥१३॥
अहेर्यातारं कमपश्य इन्द्र हृदि यत्ते जघ्नुषो भीरगच्छत् ।
नव च यन्नवतिं च स्रवन्तीः श्येनो न भीतो अतरो रजांसि ॥१४॥
इन्द्रो यातोऽवसितस्य राजा शमस्य च शृङ्गिणो वज्रबाहुः ।
सेदु राजा क्षयति चर्षणीनामरान्न नेमिः परि ता बभूव ॥१५॥

---

## XXXIII. RIGVEDA I. 50.

10 उदु त्यं जातवेदसं देवं वहन्ति केतवः ।
दृशे विश्वाय सूर्यम् ॥१॥
अप त्ये तायवो यथा नक्षत्रा यन्त्यक्तुभिः ।
सूराय विश्वचक्षसे ॥२॥
अदृश्रमस्य केतवो वि रश्मयो जनाँ अनु ।
15 भ्राजन्तो अग्नयो यथा ॥३॥
तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य ।
विश्वमा भासि रोचनम् ॥४॥
प्रत्यङ्देवानां विशः प्रत्यङ्ङुदेषि मानुषान् ।
प्रत्यङ्विश्वं स्वर्दृशे ॥५॥
20 येना पावक चक्षसा भुरण्यन्तं जनाँ अनु ।

त्वं वरुण पश्यसि ॥ ६ ॥
वि द्यामेषि रजस्पृथ्वहा मिमानो अक्तुभिः ।
पश्यञ्जन्मानि सूर्य ॥ ७ ॥
सप्त त्वा हरितो रथे वहन्ति देव सूर्य ।
5 शोचिष्केशं विचक्षण ॥ ८ ॥
अयुक्त सप्त शुन्ध्युवः सूरो रथस्य नप्त्यः ।
ताभिर्याति स्वयुक्तिभिः ॥ ९ ॥

---

## XXXIV. RIGVEDA I. 97.

अप नः शोशुचदघमग्ने शुशुग्ध्या रयिम् ।
अप नः शोशुचदघम् ॥ १ ॥
10 सुक्षेत्रिया सुगातुया वसूया च यजामहे ।
अप नः शोशुचदघम् ॥ २ ॥
प्र यद्भन्दिष्ठ एषां प्रास्माकासश्च सूरयः ।
अप नः शोशुचदघम् ॥ ३ ॥
प्र यत्ते अग्ने सूरयो जायेमहि प्र ते वयम् ।
15 अप नः शोशुचदघम् ॥ ४ ॥
प्र यदग्नेः सहस्वतो विश्वतो यन्ति भानवः ।
अप नः शोशुचदघम् ॥ ५ ॥
त्वं हि विश्वतोमुख विश्वतः परिभूरसि ।
अप नः शोशुचदघम् ॥ ६ ॥
20 द्विषो नो विश्वतोमुखाति नावेव पारय ।

अप नः शोशुचदघम् ॥७॥
स नः सिन्धुमिव नावयाति पर्षा स्वस्तये ।
अप नः शोशुचदघम् ॥८॥

---

XXXV. RIGVEDA I. 165.

कया शुभा सवयसः सनीळाः समान्या मरुतः सं मिमिक्षुः ।
5 कया मती कुत एतास एते ऽर्चन्ति शुष्मं वृषणो वसूया ॥१॥
कस्य ब्रह्माणि जुजुषुर्युवानः को अध्वरे मरुत आ ववर्त ।
श्येनाँ इव ध्रजतो अन्तरिक्षे केन महा मनसा रीरमाम ॥२॥
कुतस्त्वमिन्द्र माहिनः सन्नेको यासि सत्पते किं त इत्था ।
सं पृच्छसे समराणः शुभानैर्वोचेस्तन्नो हरिवो यत्ते अस्मे ॥३॥
10 ब्रह्माणि मे मतयः शं सुतासः शुष्म इयर्ति प्रभृतो मे अद्रिः ।
आ शासते प्रति हर्यन्त्युक्थेमा हरी वहतस्ता नो अच्छ ॥४॥
अतो वयमन्तमेभिर्युजानाः स्वक्षत्रेभिस्तन्वः शुम्भमानाः ।
महोभिरेताँ उप युज्महे न्विन्द्र स्वधामनु हि नो बभूथ ॥५॥
क्व स्या वो मरुतः स्वधासीद्यन्मामेकं समधत्ताहिहत्ये ।
15 अहं ह्युग्रस्तविषस्तुविष्मान्विश्वस्य शत्रोरनमं वधस्नैः ॥६॥
भूरि चकर्थ युज्येभिरस्मे समानेभिर्वृषभ पौंस्येभिः ।
भूरीणि हि कृणवामा शविष्ठेन्द्र क्रत्वा मरुतो यद्वशाम ॥७॥
वधीं वृत्रं मरुत इन्द्रियेण स्वेन भामेन तविषो बभूवान् ।
अहमेता मनवे विश्वश्चन्द्राः सुगा अपश्चकर वज्रबाहुः ॥८॥
20 अनुत्तमा ते मघवन्नकिर्नु न त्वावाँ अस्ति देवता विदानः ।

न जायमानो नशते न जातो यानि करिष्या कृणुहि प्रवृद्ध ॥९॥
एकस्य चिन्मे विभ्व१स्त्वोजो या नु दधृष्वान्कृणवै मनीषा ।
अहं ह्यू१ग्रो मरुतो विदानो यानि च्यवमिन्द्र इदीश एषाम् ॥१०॥
अमन्दन्मा मरुत स्तोमो अत्र यन्मे नरः श्रुत्यं ब्रह्म चक्र ।
5 इन्द्राय वृष्णे सुमखाय मह्यं सख्ये सखायस्तन्वे तनूभिः ॥११॥
एवेदेते प्रति मा रोचमाना अनेद्यः श्रव एषो दधानाः ।
संचक्ष्या मरुतश्चन्द्रवर्णा अच्छान्त मे छदयाथा च नूनम् ॥१२॥
को न्वत्र मरुतो मामहे वः प्र यातन सखीँरच्छा सखायः ।
मन्मानि चित्रा अपिवातयन्त एषां भूत नवेदा म ऋतानाम् ॥१३॥
10 आ यद्दुवस्याद्दुवसे न कारुरस्माञ्चक्रे मान्यस्य मेधा ।
ओ षु वर्त्त मरुतो विप्रमच्छेमा ब्रह्माणि जरिता वो अर्चत् ॥१४॥
एष व स्तोमो मरुत इयं गीर्मान्दार्यस्य मान्यस्य कारोः ।
एषा यासीष्ट तन्वे वयां विद्यामेषं वृजनं जीरदानुम् ॥१५॥

---

XXXVI. RIGVEDA III. 62.

तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ।
15 धियो यो नः प्रचोदयात् ॥१०॥
देवस्य सवितुर्वयं वाजयन्तः पुरंध्या ।
भगस्य रातिमीमहे ॥११॥
देवं नरः सवितारं विप्रा यज्ञैः सुवृक्तिभिः ।
नमस्यन्ति धियेषिताः ॥१२॥

---

## XXXVII. RIGVEDA IV. 42.

मम द्विता राष्ट्रं क्षत्रियस्य विश्वायोर्विश्वे अमृता यथा नः ।
क्रतुं सचन्ते वरुणस्य देवा राजामि कृष्टेरुपमस्य वव्रेः ॥१॥
अहं राजा वरुणो मह्यं तान्यसुर्याणि प्रथमा धारयन्त ।
क्रतुं सचन्ते वरुणस्य देवा राजामि कृष्टेरुपमस्य वव्रेः ॥२॥
5 अहमिन्द्रो वरुणस्ते महित्वोर्वी गभीरे रजसी सुमेके ।
त्वष्टेव विश्वा भुवनानि विद्वान्समैरयं रोदसी धारयं च ॥३॥
अहमपो अपिन्वमुक्षमाणा धारयं दिवं सदन ऋतस्य ।
ऋतेन पुत्रो अदितेर्ऋतावोत त्रिधातु प्रथयद्वि भूम ॥४॥
मां नरः स्वश्वा वाजयन्तो मां वृताः समरणे हवन्ते ।
10 कृणोम्याजिं मघवाहमिन्द्र इयर्मि रेणुमभिभूत्योजाः ॥५॥
अहं ता विश्वा चकरं नकिर्मा दैव्यं सहो वरते अप्रतीतम् ।
यन्मा सोमासो ममदन्यदुक्थोभे भयेते रजसी अपारे ॥६॥
विदुष्टे विश्वा भुवनानि तस्य ता प्र ब्रवीषि वरुणाय वेधः ।
त्वं वृत्राणि शृण्विषे जघन्वान्त्वं वृताँ अरिणा इन्द्र सिन्धून् ॥७॥

---

## XXXVIII. RIGVEDA IV. 52.

15 प्रति ष्या सूनरी जनी व्युच्छन्ती परि स्वसुः ।
दिवो अदर्शि दुहिता ॥१॥
अश्वेव चित्रारुषी माता गवामृतावरी ।
सखाभूदश्विनोरुषाः ॥२॥
उत सखास्यश्विनोरुत माता गवामसि ।

उतोषो वस्व ईशिषे ॥३॥
यावयद्द्वेषसं त्वा चिकित्वित्सूनृतावरि ।
प्रति स्तोमैरभुत्स्महि ॥४॥
प्रति भद्रा अदृक्षत गवां सर्गा न रश्मयः ।
ओषा अप्रा उरु ज्रयः ॥५॥
आपप्रुषी विभावरि व्यावर्ज्योतिषा तमः ।
उषो अनु स्वधामव ॥६॥
आ द्यां तनोषि रश्मिभिरान्तरिक्षमुरु प्रियम् ।
उषः शुक्रेण शोचिषा ॥७॥

---

## XXXIX. RIGVEDA V. 24.

अग्ने त्वं नो अन्तम उत त्राता शिवो भवा वरूथ्यः ॥१॥
वसुरग्निर्वसुश्रवा अच्छा नक्षि द्युमत्तमं रयिं दाः ॥२॥
स नो बोधि श्रुधी हवमुरुष्या णो अघायतः समस्मात् ॥३॥
तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः ॥४॥

---

## XL. RIGVEDA V. 40.

स्वर्भानोरध यदिन्द्र माया अवो दिवो वर्तमाना अवाहन् ।
गूळ्हं सूर्यं तमसापव्रतेन तुरीयेण ब्रह्मणाविन्ददत्रिः ॥६॥
मा मामिमं तव सन्तमत्र इरस्या द्रुग्धो भियसा नि गारीत् ।
त्वं मित्रो असि सत्यराधास्तौ मेहावतं वरुणश्च राजा ॥७॥
ग्राव्णो ब्रह्मा युयुजानः सपर्यन्कीरिणा देवान्नमसोपशिक्षन् ॥

अत्रिः सूर्यस्य दिवि चक्षुराधात्स्वर्भानोरप माया अघुक्षत् ॥८॥

---

XLI. RIGVEDA VII. 55.

अमीवहा वास्तोष्पते विश्वा रूपाण्याविशन् ।
सखा सुशेव एधि नः ॥१॥
यदर्जुन सारमेय दतः पिशङ्ग यच्छसे ।
5 वीव भ्राजन्त ऋष्टय उप स्रक्वेषु बप्सतो नि षु स्वप ॥२॥
स्तेनं राय सारमेय तस्करं वा पुनःसर ।
स्तोतॄनिन्द्रस्य रायसि किमस्मान्दुच्छुनायसे नि षु स्वप ॥३॥
त्वं सूकरस्य दर्दृहि तव दर्दर्तु सूकरः ।
स्तोतॄनिन्द्रस्य रायसि किमस्मान्दुच्छुनायसे नि षु स्वप ॥४॥
10 सस्तु माता सस्तु पिता सस्तु श्वा सस्तु विश्पतिः ।
ससन्तु सर्वे ज्ञातयः सस्त्वयमभितो जनः ॥५॥
य आस्ते यश्च चरति यश्च पश्यति नो जनः ।
तेषां सं हन्मो अक्षाणि यथेदं हर्म्यं तथा ॥६॥
सहस्रशृङ्गो वृषभो यः समुद्रादुदाचरत् ।
15 तेना सहस्येना वयं नि जनान्स्वापयामसि ॥७॥
प्रोष्ठेशया वह्येशया नारीर्यास्तल्पशीवरीः ।
स्त्रियो याः पुण्यगन्धास्ताः सर्वाः स्वापयामसि ॥८॥

---

XLII. RIGVEDA VII. 56.

क ईं व्यक्ता नरः सनीळा रुद्रस्य मर्या अधा स्वश्वाः ॥१॥

नकिर्ह्येषां जनूंषि वेद ते अङ्ग विद्रे मिथो जनित्रम् ॥२॥
अभि स्वपूभिर्मिथो वपन्त वातस्वनसः श्येना अस्पृध्रन् ॥३॥
एतानि धीरो निण्या चिकेत पृश्निर्यदूधो मही जभार ॥४॥
सा विट्सुवीरा मरुद्भिरस्तु सनात्सहन्ती पुष्यन्ती नृम्णम् ॥५॥
5 यामं येष्ठाः शुभा शोभिष्ठाः श्रिया संमिश्ला ओजोभिरुग्राः ॥
उग्रं व ओज स्थिरा शवांस्यधा मरुद्भिर्गणस्तुविष्मान् ॥७॥
शुभ्रो वः शुष्मः क्रुध्मी मनांसि धुनिर्मुनिरिव शर्धस्य धृष्णोः ॥
सनेम्यस्मद्युयोत दिद्युं मा वो दुर्मतिरिह प्रणङ्नः ॥९॥
प्रिया वो नाम हुवे तुराणामा यत्तृपन्मरुतो वावशानाः ॥१०॥

---

XLIII. RIGVEDA VII. 86.

10 धीरा त्वस्य महिना जनूंषि वि यस्तस्तम्भ रोदसी चिदुर्वी ।
प्र नाकमृष्वं नुनुदे बृहन्तं द्विता नक्षत्रं पप्रथच्च भूम ॥१॥
उत स्वया तन्वा३ सं वदे तत्कदा न्व१न्तर्वरुणे भुवानि ।
किं मे हव्यमहृणानो जुषेत कदा मृळीकं सुमना अभि ख्यम् ॥
पृच्छे तदेनो वरुण दिदृक्षूपो एमि चिकितुषो विपृच्छम् ।
15 समानमिन्मे कवयश्चिदाहुरयं ह तुभ्यं वरुणो हृणीते ॥३॥
किमाग आस वरुण ज्येष्ठं यत्स्तोतारं जिघांससि सखायम् ।
प्र तन्मे वोचो दूळभ स्वधावोऽव त्वानेना नमसा तुर इयाम् ॥
अव द्रुग्धानि पित्र्या सृजा नोऽव या वयं चकृमा तनूभिः ।
अव राजन्पशुतृपं न तायुं सृजा वत्सं न दाम्नो वसिष्ठम् ॥५॥
20 न स स्वो दक्षो वरुण ध्रुतिः सा सुरा मन्युर्विभीदको अचित्तिः ।

अस्ति ज्यायान्कनीयस उपारे स्वप्नश्चनेदनृतस्य प्रयोता ॥६॥
अरं दासो न मीळ्हुषे कराण्यहं देवाय भूर्णयेऽनागाः ।
अचेतयदचितो देवो अर्यो गृत्सं राये कवितरो जुनाति ॥७॥
अयं सु तुभ्यं वरुण स्वधावो हृदि स्तोम उपश्रितश्चिदस्तु ।
5 शं नः क्षेमे शमु योगे नो अस्तु यूयं पात स्वस्तिभिः सदा नः ॥

---

XLIV. RIGVEDA VII. 88.

प्र शुन्ध्युवं वरुणाय प्रेष्ठां मतिं वसिष्ठ मीळ्हुषे भरस्व ।
य ईमर्वाञ्चं करते यजत्रं सहस्रामघं वृषणं बृहन्तम् ॥१॥
अधा न्वस्य संदृशं जगन्वानग्नेरनीकं वरुणस्य मंसि ।
स्व१र्यदश्मन्नधिपा उ अन्धोऽभि मा वपुर्दृशये निनीयात् ॥
10 आ यद्रुहाव वरुणश्च नावं प्र यत्समुद्रमीरयाव मध्यम् ।
अधि यदपां स्नुभिश्चराव प्र प्रेङ्ख ईङ्खयावहै शुभे कम् ॥३॥
वसिष्ठं ह वरुणो नाव्याधादृषिं चकार स्वपा महोभिः ।
स्तोतारं विप्रः सुदिनत्वे अह्नां यान्नु द्यावस्ततनन्यादुषासः ॥४॥
क्व१ त्यानि नौ सख्या बभूवुः सचावहे यदवृकं पुरा चित् ।
15 बृहन्तं मानं वरुण स्वधावः सहस्रद्वारं जगमा गृहं ते ॥५॥
य आपिर्नित्यो वरुण प्रियः सन्त्वामागांसि कृणवत्सखा ते ।
मा त एनस्वन्तो यक्षिन्भुजेम यन्धि ष्मा विप्र स्तुवते वरूथम् ॥
ध्रुवासु त्वासु क्षितिषु क्षियन्तो व्य१स्मत्पाशं वरुणो मुमोचत् ।
अवो वन्वाना अदितेरुपस्थाद्यूयं पात स्वस्तिभिः सदा नः ॥

---

## XLV. RIGVEDA VII. 89.

मो षु वरुण मृन्मयं गृहं राजन्नहं गमम् ।
मृळा सुक्षत्र मृळय ॥१॥
यदेमि प्रस्फुरन्निव दृतिर्न ध्मातो अद्रिवः ।
मृळा सुक्षत्र मृळय ॥२॥
क्रत्वः समह दीनता प्रतीपं जगमा शुचे ।
मृळा सुक्षत्र मृळय ॥३॥
अपां मध्ये तस्थिवांसं तृष्णाविदज्जरितारम् ।
मृळा सुक्षत्र मृळय ॥४॥
यत्किं चेदं वरुण दैव्ये जनेऽभिद्रोहं मनुष्याऽ३श्चरामसि ।
अचित्ती यत्तव धर्मा युयोपिम मा नस्तस्मादेनसो देव रीरिषः ॥५॥

---

## XLVI. RIGVEDA VIII. 14.

यदिन्द्राहं यथा त्वमीशीय वस्व एक इत् ।
स्तोता मे गोषखा स्यात् ॥१॥
शिक्षेयमस्मै दित्सेयं शचीपते मनीषिणे ।
यदहं गोपतिः स्याम् ॥२॥
धेनुष्ट इन्द्र सूनृता यजमानाय सुन्वते ।
गामश्वं पिप्युषी दुहे ॥३॥
न ते वर्तास्ति राधस इन्द्र देवो न मर्त्यः ।
यद्दित्ससि स्तुतो मघम् ॥४॥
यज्ञ इन्द्रमवर्धयद्यद्भूमिं व्यवर्तयत् ।

चक्राण ओपशं दिवि ॥५॥

वावृधानस्य ते वयं विश्वा धनानि जिग्युषः ।

ऊतिमिन्द्रा वृणीमहे ॥६॥

व्य१न्तरिक्षमतिरन्मदे सोमस्य रोचना ।

5 इन्द्रो यदभिनद्वलम् ॥७॥

उद्गा आजदङ्गिरोभ्य आविष्कृण्वन्गुहा सतीः ।

अर्वाञ्चं नुनुदे वलम् ॥८॥

इन्द्रेण रोचना दिवो दृळ्हानि दृंहितानि च ।

स्थिराणि न पराणुदे ॥९॥

10 अपामूर्मिर्मदन्निव स्तोम इन्द्राजिरायते ।

वि ते मदा अराजिषुः ॥१०॥

त्वं हि स्तोमवर्धन इन्द्रास्युक्थवर्धनः ।

स्तोतॄणामुत भद्रकृत् ॥११॥

इन्द्रमित्केशिना हरी सोमपेयाय वक्षतः ।

15 उप यज्ञं सुराधसम् ॥१२॥

अपां फेनेन नमुचेः शिर इन्द्रोदवर्तयः ।

विश्वा यदजय स्पृधः ॥१३॥

मायाभिरुत्सिसृप्सत इन्द्र द्यामारुरुक्षतः ।

अव दस्यूँरधूनुथाः ॥१४॥

20 असुन्वामिन्द्र संसदं विषूचीं व्यनाशयः ।

सोमपा उत्तरो भवन् ॥१५॥

---

### XLVII. RIGVEDA VIII. 85.

वृत्रस्य त्वा श्वसथादीषमाणा विश्वे देवा अजहुर्ये सखायः ।
मरुद्भिरिन्द्र सख्यं ते अस्त्वथेमा विश्वाः पृतना जयासि ॥७॥
त्रिः षष्टिस्त्वा मरुतो वावृधाना उस्रा इव राशयो यज्ञियासः ।
उप त्वेमः कृधि नो भागधेयं शुष्मं त एना हविषा विधेम ॥८॥
5 तिग्ममायुधं मरुतामनीकं कस्त इन्द्र प्रति वज्रं दधर्ष ।
अनायुधासो असुरा अदेवाश्चक्रेण ताँ अप वप ऋजीषिन् ॥

---

### XLVIII. RIGVEDA VIII. 91.

अग्ने घृतस्य धीतिभिस्तेपानो देव शोचिषा ।
आ देवान्वक्षि यक्षि च ॥१६॥
तं त्वाजनन्त मातरः कविं देवासो अङ्गिरः ।
10 हव्यवाहममर्त्यम् ॥१७॥
प्रचेतसं त्वा कवेऽग्ने दूतं वरेण्यम् ।
हव्यवाहं नि षेदिरे ॥१८॥
नहि मे अस्त्यघ्न्या न स्वधितिर्वनन्वति ।
अथैतादृग्भरामि ते ॥१९॥
15 यदग्ने कानि कानि चिदा ते दारूणि दध्मसि ।
ता जुषस्व यविष्ठ्य ॥२०॥
अग्निमिन्धानो मनसा धियं सचेत मर्त्यः ।
अग्निमीधे विवस्वभिः ॥२२॥

---

## XLIX. RIGVEDA X. 9.

आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन ।
महे रणाय चक्षसे ॥१॥
यो वः शिवतमो रसस्तस्य भाजयतेह नः ।
उशतीरिव मातरः ॥२॥
5 तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ ।
आपो जनयथा च नः ॥३॥

---

## L. RIGVEDA X. 14.

परेयिवांसं प्रवतो महीरनु बहुभ्यः पन्थामनुपस्पशानम् ।
वैवस्वतं संगमनं जनानां यमं राजानं हविषा दुवस्य ॥१॥
यमो नो गातुं प्रथमो विवेद नैषा गव्यूतिरपभर्तवा उ ।
10 यत्रा नः पूर्वे पितरः परेयुरेना जज्ञानाः पथ्या३ अनु स्वाः ॥२॥
प्रेहि प्रेहि पथिभिः पूर्व्येभिर्यत्रा नः पूर्वे पितरः परेयुः ।
उभा राजाना स्वधया मदन्ता यमं पश्यासि वरुणं च देवम् ॥७॥
सं गच्छस्व पितृभिः सं यमेनेष्टापूर्तेन परमे व्योमन् ।
हित्वायावद्यं पुनरस्तमेहि सं गच्छस्व तन्वा सुवर्चाः ॥८॥
15 अपेत वीत वि च सर्पतातोऽस्मा एतं पितरो लोकमक्रन् ।
अहोभिरद्भिरक्तुभिर्व्यक्तं यमो ददात्यवसानमस्मै ॥९॥
अति द्रव सारमेयौ श्वानौ चतुरक्षौ शबलौ साधुना पथा ।
अथा पितॄन्सुविदत्राँ उपेहि यमेन ये सधमादं मदन्ति ॥१०॥
यौ ते श्वानौ यम रक्षितारौ चतुरक्षौ पथिरक्षी नृचक्षसौ ।

ताभ्यामेनं परि देहि राजन्स्वस्ति चास्मा अनमीवं च धेहि ॥
उरूणसावसुतृपा उदुम्बलौ यमस्य दूतौ चरतो जनाँ अनु ।
तावस्मभ्यं दृशये सूर्याय पुनर्दातामसुमद्येह भद्रम् ॥१२॥

---

## LI. RIGVEDA X. 16.

मैनमग्ने वि दहो माभि शोचो मास्य त्वचं चिक्षिपो मा शरीरम् ।
5 यदा शृतं कृणवो जातवेदोऽथेमेनं प्र हिणुतात्पितृभ्यः ॥१॥
शृतं यदा करसि जातवेदोऽथेमेनं परि दत्तात्पितृभ्यः ।
यदा गच्छात्यसुनीतिमेतामथा देवानां वशनीर्भवाति ॥२॥
सूर्यं चक्षुर्गच्छतु वातमात्मा द्यां च गच्छ पृथिवीं च धर्मणा ।
अपो वा गच्छ यदि तत्र ते हितमोषधीषु प्रति तिष्ठा शरीरैः ॥
10 अजो भागस्तपसा तं तपस्व तं ते शोचिस्तपतु तं ते अर्चिः ।
यास्ते शिवास्तन्वो जातवेदस्ताभिर्वहैनं सुकृतामु लोकम् ॥४॥
अव सृज पुनरग्ने पितृभ्यो यस्त आहुतश्चरति स्वधाभिः ।
आयुर्वसान उप वेतु शेषः सं गच्छतां तन्वा जातवेदः ॥५॥
यत्ते कृष्णः शकुन आतुतोद पिपीलः सर्प उत वा श्वापदः ।
15 अग्निष्टद्विश्वादगदं कृणोतु सोमश्च यो ब्राह्मणाँ आविवेश ॥६॥
अग्नेर्वर्म परि गोभिर्व्ययस्व सं प्रोर्णुष्व पीवसा मेदसा च ।
नेत्त्वा धृष्णुर्हरसा जर्हृषाणो दधृग्विधक्ष्यन्पर्यङ्खयाते ॥७॥
इममग्ने चमसं मा वि जिह्वरः प्रियो देवानामुत सोम्यानाम् ।
एष यश्चमसो देवपानस्तस्मिन्देवा अमृता मादयन्ते ॥८॥
20 क्रव्यादमग्निं प्र हिणोमि दूरं यमराज्ञो गच्छतु रिप्रवाहः ।

इहैवायमितरो जातवेदा देवेभ्यो हव्यं वहतु प्रजानन् ॥९॥
यो अग्निः क्रव्यात्प्रविवेश वो गृहमिमं पश्यन्नितरं जातवेदसम् ।
तं हरामि पितृयज्ञाय देवं स घर्ममिन्वात्परमे सधस्थे ॥१०॥

यो अग्निः क्रव्यवाहनः पितॄन्यक्षदृतावृधः ।
5 प्रेदु हव्यानि वोचति देवेभ्यश्च पितृभ्य आ ॥११॥
उशन्तस्त्वा नि धीमह्युशन्तः समिधीमहि ।
उशन्नुशत आ वह पितॄन्हविषे अत्तवे ॥१२॥
यं त्वमग्ने समदहस्तमु निर्वापया पुनः ।
कियाम्ब्वत्र रोहतु पाकदूर्वा व्यल्कशा ॥१३॥
10 शीतिके शीतिकावति ह्लादिके ह्लादिकावति ।
मण्डूक्या३ सु सं गम इमं स्व१ग्निं हर्षय ॥१४॥

---

## LII. RIGVEDA X. 17.

त्वष्टा दुहित्रे वहतुं कृणोतीतीदं विश्वं भुवनं समेति ।
यमस्य माता पर्युह्यमाना महो जाया विवस्वतो ननाश ॥१॥
अपागूहन्नमृतां मर्त्येभ्यः कृत्वी सवर्णामददुर्विवस्वते ।
15 उताश्विनावभरद्यत्तदासीदजहादु द्वा मिथुना सरण्यूः ॥२॥
पूषा त्वेतश्च्यावयतु प्र विद्वाननष्टपशुर्भुवनस्य गोपाः ।
स त्वैतेभ्यः परि ददत्पितृभ्योऽग्निर्देवेभ्यः सुविदत्रियेभ्यः ॥३॥
आयुर्विश्वायुः परि पासति त्वा पूषा त्वा पातु प्रपथे पुरस्तात् ।
यत्रासते सुकृतो यत्र ते ययुस्तत्र त्वा देवः सविता दधातु ॥४॥
20 पूषेमा आशा अनु वेद सर्वाः सो अस्माँ अभयतमेन नेषत् ।

स्वस्तिदा आघृणिः सर्ववीरोऽप्रयुच्छन्पुर एतु प्रजानन् ॥५॥
प्रपथे पथामजनिष्ट पूषा प्रपथे दिवः प्रपथे पृथिव्याः ।
उभे अभि प्रियतमे सधस्थे आ च परा च चरति प्रजानन् ॥

---

LIII. RIGVEDA X. 18.

परं मृत्यो अनु परेहि पन्थां यस्ते स्व इतरो देवयानात् ।
5 चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजां रीरिषो मोत वीरान् ॥
मृत्योः पदं योपयन्तो यदैत द्राघीय आयुः प्रतरं दधानाः ।
आप्यायमानाः प्रजया धनेन शुद्धाः पूता भवत यज्ञियासः ॥२॥
इमे जीवा वि मृतैराववृत्रन्नभूद्भद्रा देवहूतिर्नो अद्य ।
प्राञ्चो अगाम नृतये हसाय द्राघीय आयुः प्रतरं दधानाः ॥३॥
10 इमं जीवेभ्यः परिधिं दधामि मैषां नु गादपरो अर्थमेतम् ।
शतं जीवन्तु शरदः पुरूचीरन्तर्मृत्युं दधतां पर्वतेन ॥४॥
यथाहान्यनुपूर्वं भवन्ति यथ ऋतव ऋतुभिर्यन्ति साधु ।
यथा न पूर्वमपरो जहात्येवा धातरायूंषि कल्पयैषाम् ॥५॥
आ रोहतायुर्जरसं वृणाना अनुपूर्वं यतमाना यति ष्ठ ।
15 इह त्वष्टा सुजनिमा सजोषा दीर्घमायुः करति जीवसे वः ॥६॥
इमा नारीरविधवाः सुपत्नीराञ्जनेन सर्पिषा सं विशन्तु ।
अनश्रवोऽनमीवाः सुरत्ना आ रोहन्तु जनयो योनिमग्रे ॥७॥
उदीर्ष्व नार्यभि जीवलोकं गतासुमेतमुप शेष एहि ।
हस्तग्राभस्य दिधिषोस्तवेदं पत्युर्जनित्वमभि सं बभूथ ॥८॥
20 धनुर्हस्तादाददानो मृतस्यास्मे क्षत्राय वर्चसे बलाय ।

अत्रैव त्वमिह वयं सुवीरा विश्वा स्पृधो अभिमातीर्जयेम ॥९॥
उप सर्प मातरं भूमिमेतामुरुव्यचसं पृथिवीं सुशेवाम् ।
ऊर्णम्रदा युवतिर्दक्षिणावत एषा त्वा पातु निर्ऋतेरुपस्थात् ॥
उच्छ्वञ्चस्व पृथिवि मा नि बाधथाः सूपायनास्मै भव सूपवञ्चना ।
5 माता पुत्रं यथा सिचाभ्येनं भूम ऊर्णुहि ॥११॥
उच्छ्वञ्चमाना पृथिवी सु तिष्ठतु सहस्रं मित उप हि श्रयन्ताम् ।
ते गृहासो घृतश्चुतो भवन्तु विश्वाहास्मै शरणाः सन्त्वत्र ॥१२॥
उत्ते स्तभ्नामि पृथिवीं त्वत्परीमं लोगं निदधन्मो अहं रिषम् ।
एतां स्थूणां पितरो धारयन्तु तेऽत्रा यमः सादना ते मिनोतु ॥
10 प्रतीचीने मामहनीष्वाः पर्णमिवा दधुः ।
प्रतीचीं जग्रभा वाचमश्वं रशनया यथा ॥१४॥

---

## LIV. RIGVEDA X. 33.

कुरुश्रवणमावृणि राजानं त्रासदस्यवम् ।
मंहिष्ठं वाघतामृषिः ॥४॥
यस्य मा हरितो रथे तिस्रो वहन्ति साधुया ।
15 स्तवै सहस्रदक्षिणे ॥५॥
यस्य प्रस्वादसो गिर उपमश्रवसः पितुः ।
क्षेत्रं न रण्वमूचुषे ॥६॥
अधि पुत्रोपमश्रवो नपान्मित्रातिथेरिहि ।
पितुष्टे अस्मि वन्दिता ॥७॥
20 यदीशीयामृतानामुत वा मर्त्यानाम् ।

जीवेदिन्मघवा मम ॥८॥
न देवानामति व्रतं शतात्मा चन जीवति ।
तथा युजा वि वावृते ॥९॥

---

LV. RIGVEDA X. 40. 10.

जीवं रुदन्ति वि मयन्ते अध्वरे दीर्घामनु प्रसितिं दीधियुर्नरः ।
5 वामं पितृभ्यो य इदं समेरिरे मयः पतिभ्यो जनयः परिष्वजे ॥

---

LVI. RIGVEDA X. 52.

विश्वे देवाः शास्तन मा यथेह होता वृतो मनवै यन्निषद्य ।
प्र मे ब्रूत भागधेयं यथा वो येन पथा हव्यमा वो वहानि ॥१॥
अहं होता न्यसीदं यजीयान्विश्वे देवा मरुतो मा जुनन्ति ।
अहरहरश्विनाध्वर्यवं वां ब्रह्मा समिद्भवति साहुतिर्वाम् ॥२॥
10 अयं यो होता किरु स यमस्य कमप्यूहे यत्समञ्जन्ति देवाः ।
अहरहर्जायते मासि मास्यथा देवा दधिरे हव्यवाहम् ॥३॥
मां देवा दधिरे हव्यवाहमपम्लुक्तं बहु कृच्छ्रा चरन्तम् ।
अग्निर्विद्वान्यज्ञं नः कल्पयाति पञ्चयामं त्रिवृतं सप्ततन्तुम् ॥
आ वो यक्ष्यमृतत्वं सुवीरं यथा वो देवा वरिवः कराणि ।
15 आ बाह्वोर्वज्रमिन्द्रस्य धेयामथेमा विश्वाः पृतना जयाति ॥५॥
त्रीणि शता त्री सहस्राण्यग्निं त्रिंशच्च देवा नव चासपर्यन् ।
औक्षन्घृतैरस्तृणन्बर्हिरस्मा आदिद्धोतारं न्यसादयन्त ॥६॥

---

## LVII. RIGVEDA X. 53.

तन्तुं तन्वन्रजसो भानुमन्विहि ज्योतिष्मतः पथो रक्ष धिया कृतान् ।
अनुल्बणं वयत जोगुवामपो मनुर्भव जनया दैव्यं जनम् ॥६॥
अश्मन्वती रीयते सं रभध्वमुत्तिष्ठत प्र तरता सखायः ।
अत्रा जहाम ये असन्नशेवाः शिवान्वयमुत्तरेमाभि वाजान् ॥८॥

---

## LVIII. RIGVEDA X. 85. 36, 24–26, 32–33, 27, 43–47.

5 गृभ्णामि ते सौभगत्वाय हस्तं मया पत्या जरदष्टिर्यथासः ।
भगो अर्यमा सविता पुरंधिर्मह्यं त्वादुर्गार्हपत्याय देवाः ॥३६॥
प्र त्वा मुञ्चामि वरुणस्य पाशाद्येन त्वाबध्नात्सविता सुशेवः ।
ऋतस्य योनौ सुकृतस्य लोकेऽरिष्टां त्वा सह पत्या दधामि ॥२४॥
प्रेतो मुञ्चामि नामुतः सुबद्धाममुतस्करम् ।
10 यथेयमिन्द्र मीढ्वः सुपुत्रा सुभगासति ॥२५॥
पूषा त्वेतो नयतु हस्तगृह्याश्विना त्वा प्र वहतां रथेन ।
गृहान्गच्छ गृहपत्नी यथासो वशिनी त्वं विदथमा वदासि ॥२६॥
मा विदन्परिपन्थिनो य आसीदन्ति दंपती ।
सुगेभिर्दुर्गमतीतामप द्रान्त्वरातयः ॥३२॥
15 सुमङ्गलीरियं वधूरिमां समेत पश्यत ।
सौभाग्यमस्यै दत्वायाथास्तं वि परेतन ॥३३॥
इह प्रियं प्रजया ते समृध्यतामस्मिन्गृहे गार्हपत्याय जागृहि ।
एना पत्या तन्वं१ सं सृजस्वाधा जिव्री विदथमा वदाथः ॥२७॥
आ नः प्रजां जनयतु प्रजापतिराजरसाय समनक्त्वर्यमा ।

अदुर्मङ्गलीः पतिलोकमा विश शं नो भव द्विपदे शं चतुष्पदे॥
अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः ।
वीरसूर्देवकामा स्योना शं नो भव द्विपदे शं चतुष्पदे ॥४४॥
इमां त्वमिन्द्र मीढ्वः सुपुत्रां सुभगां कृणु ।
5 दशास्यां पुत्राना धेहि पतिमेकादशं कृधि ॥४५॥
सम्राज्ञी श्वशुरे भव सम्राज्ञी श्वश्र्वां भव ।
ननान्दरि सम्राज्ञी भव सम्राज्ञी अधि देवृषु ॥४६॥
समञ्जन्तु विश्वे देवाः समापो हृदयानि नौ ।
सं मातरिश्वा सं धाता समु देष्ट्री दधातु नौ ॥४७॥

---

## LIX. RIGVEDA X. 137.

10 उत देवा अवहितं देवा उन्नयथा पुनः ।
उतागश्चक्रुषं देवा देवा जीवयथा पुनः ॥१॥
द्वाविमौ वातौ वात आ सिन्धोरा परावतः ।
दक्षं ते अन्य आ वातु परान्यो वातु यद्रपः ॥२॥
आ वात वाहि भेषजं वि वात वाहि यद्रपः ।
15 त्वं हि विश्वभेषजो देवानां दूत ईयसे ॥३॥
आ त्वागमं शंतातिभिरथो अरिष्टतातिभिः ।
दक्षं ते भद्रमाभार्षं परा यक्ष्मं सुवामि ते ॥४॥
त्रायन्तामिह देवास्त्रायतां मरुतां गणः ।
त्रायन्तां विश्वा भूतानि यथायमरपा असत् ॥५॥
20 आप इद्वा उ भेषजीरापो अमीवचातनीः ।

आपः सर्वस्य भेषजीस्तास्ते कृण्वन्तु भेषजम् ॥६॥
हस्ताभ्यां दशशाखाभ्यां जिह्वा वाचः पुरोगवी ।
अनामयित्नुभ्यां त्वा ताभ्यां त्वोप स्पृशामसि ॥७॥

---

LX. RIGVEDA X. 154.

सोम एकेभ्यः पवते घृतमेक उपासते ।
5 येभ्यो मधु प्रधावति तांश्चिदेवापि गच्छतात् ॥१॥
तपसा ये अनाधृष्यास्तपसा ये स्वर्ययुः ।
तपो ये चक्रिरे महस्तांश्चिदेवापि गच्छतात् ॥२॥
ये युध्यन्ते प्रधनेषु शूरासो ये तनूत्यजः ।
ये वा सहस्रदक्षिणास्तांश्चिदेवापि गच्छतात् ॥३॥
10 ये चित्पूर्व ऋतसाप ऋतावान ऋतावृधः ।
पितॄन्तपस्वतो यम तांश्चिदेवापि गच्छतात् ॥४॥
सहस्रणीथाः कवयो ये गोपायन्ति सूर्यम् ।
ऋषीन्तपस्वतो यम तपोजाँ अपि गच्छतात् ॥५॥

---

LXI. RIGVEDA X. 155.

परीमे गामनेषत पर्यग्निमहृषत ।
15 देवेष्वक्रत श्रवः क इमाँ आ दधर्षति ॥५॥

---

LXII. MAITRAYANI SANHITA II. 13. 23.

हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् ।

स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥१॥
यः प्राणतो निमिषतश्च राजा पतिर्विश्वस्य जगतो बभूव ।
ईशे यो अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥२॥
य ओजोदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः ।
5 यस्य छायामृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम ॥३॥
यस्येमे विश्वे गिरयो महित्वा समुद्रं यस्य रसया सहाहुः ।
दिशो यस्य प्रदिशः पञ्च देवीः कस्मै देवाय हविषा विधेम ॥
येन द्यौरुग्रा पृथिवी च दृढा येन स्व स्तभितं येन नाकः ।
यो अन्तरिक्षं विममे वरीयः कस्मै देवाय हविषा विधेम ॥५॥
10 य इमे द्यावापृथिवी तस्तभाने अधारयद्रोदसी रेजमाने ।
यस्मिन्नधि विततः सूर एति कस्मै देवाय हविषा विधेम ॥६॥
आपो ह यन्महतीर्विश्वमायन्गर्भं दधाना जनयन्तीरग्निम् ।
ततो देवानां निरवर्ततासुः कस्मै देवाय हविषा विधेम ॥७॥

---

## LXIII. MAITRAYANI SANHITA I. 5. 12.

यमो वा अम्रियत । ते देवा यम्या यममपाब्रुवन् । तां
15 यदपृच्छन्त्साब्रवीदद्यामृतेति । ते ऽब्रुवन्न वा इयमिममित्थं
मृष्यते रात्रीं सृजावहा इति । अहर्वाव तर्ह्यासीन्न रात्रिः । ते
देवा रात्रिमसृजन्त । ततः श्वस्तनमभवत् । ततः सा तममृ-
ष्यत । तस्मादाहुरहोरात्राणि वावाघं मर्षयन्तीति ।

---

## LXIV. MAITRAYANI SANHITA I. 10. 13.

प्रजापतेर्वा एतज्ज्येष्ठं तोकं यत्पर्वताः । ते पक्षिण आ-

सन् । ते परापातमासत यत्र यत्राकामयन्त । अथ वा इयं
तर्हि शिथिरासीत् । तेषामिन्द्रः पक्षानच्छिनत् । तैरिमामदृं-
हत् । ये पक्षा आसंस्ते जीमूता अभवन् । तस्मादेते सदा
पर्वतमुप प्लवन्ते । योनिर्ह्येषामेषः ।

---

### LXV. MAITRAYANI SANHITA II. 1. 12.

5 ऐन्द्राबार्हस्पत्यं हविर्निर्वपेद्यो राष्ट्रीयो नेव प्रस्तिङ्नुयात् ।
अदितिर्वै प्रजाकामौदनमपचत् । सोच्छिष्टमाश्नात् । तं वा
इन्द्रमन्तरेव गर्भं सन्तमयस्मयेन दाम्नापौम्भत् । सो ऽपोब्धो
ऽजायत । तं वा एतेन बृहस्पतिरयाजयदैन्द्राबार्हस्पत्येन ।
तस्य तद्दाम स्वयमेव व्यपद्यत । स इमा दिशो वज्रेणाभिप-
10 र्यावर्तत । यो राष्ट्रीयो नेव प्रस्तिङ्नुयात्तमेतेन याजयेदैन्द्रा-
बार्हस्पत्येन । परितो हि वा एष पाप्मना । अथैष न प्र
स्तिङ्नोति । बृहस्पतये निरुप्यता इन्द्राय क्रियते सर्वत एवैनं
मुञ्चति । वज्रेणेमा दिशो ऽभिपर्यावर्तते ।

---

### LXVI. TAITTIRIYA SANHITA II. 6. 6.

अग्नेस्त्रयो ज्यायांसो भ्रातर आसन् । ते देवेभ्यो हव्यं वह-
15 न्तः प्रामीयन्त । सो ऽग्निरबिभेदित्थं वाव स्य आर्तिमारिष्य-
तीति । स निलायत । सो ऽपः प्राविशत् । तं देवताः प्रैषमै-
च्छन् । तं मत्स्यः प्राब्रवीत् । तमशपद्धिया धिया त्वा वध्या-
सुर्यो मा प्रावोच इति । तस्मान्मत्स्यं धिया धिया घ्नन्ति । श-
प्तो हि । तमन्वविन्दन् । तमब्रुवन्नुप न आ वर्तस्व हव्यं नो

वहेति । सो ऽब्रवीद्वरं वृणै यदेव गृहीतस्याहुतस्य बहिःपरि-
धि स्कन्दात्तन्मे भ्रातॄणां भागधेयमसदिति । तस्माद्यद्गृहीतस्या-
हुतस्य बहिःपरिधि स्कन्दति तेषां तद्भागधेयम् ।

---

LXVII. AITAREYA BRAHMANA III. 20.

इन्द्रो वै वृत्रं हनिष्यन्त्सर्वा देवता अब्रवीदनु मोप तिष्ठध्व-
5 मुप मा ह्वयध्वमिति । तथेति । तं हनिष्यन्त आद्रवन् । सो
ऽवेन्मां वै हनिष्यन्त आ द्रवन्ति हन्तेमान्भीषया इति । ता-
नभि प्राश्वसीत् । तस्य श्वसथादीषमाणा विश्वे देवा अद्रवन् ।
मरुतो हैनं नाजहुः प्रहर भगवो जहि वीरयस्वेत्येवैनमेतां
वाचं वदन्त उपातिष्ठन्त । तदेतदृषिः पश्यन्नभ्यनूवाच वृत्रस्य
10 त्वा श्वसथादिति । सो ऽवेदिमे वै किल मे सचिवा इमे मा-
कामयन्त हन्तेमानस्मिन्नुक्थ आ भजा इति । तानेतस्मिन्नुक्थ
आभजत् ।

---

LXVIII. AITAREYA BRAHMANA III. 21.

इन्द्रो वै वृत्रं हत्वा सर्वा विजितीर्विजित्याब्रवीत्प्रजापति-
महमेतदसानि यत्त्वमहं महानसानीति । स प्रजापतिरब्रवी-
15 दथ को ऽहमिति । यदेवैतदवोच इत्यब्रवीत् । ततो वै को
नाम प्रजापतिरभवत् । को वै नाम प्रजापतिः । यन्महानि-
न्द्रो ऽभवत्तन्महेन्द्रस्य महेन्द्रत्वम् ।

---

LXIX. ÇATAPATHA BRAHMANA II. 2. 2.

द्वया वै देवाः । देवा अहैव देवाः । अथ ये ब्राह्मणाः शुश्रुवां-

सो ऽनूचानास्ते मनुष्यदेवाः । तेषां द्वेधा विभक्त एव यज्ञः । आहुतय एव देवानां दक्षिणा मनुष्यदेवानां ब्राह्मणानां शुश्रुवुषामनूचानानाम् । आहुतिभिरेव देवान्प्रीणाति दक्षिणाभिर्मनुष्यदेवान्ब्राह्मणाञ्छुश्रुवुषो ऽनूचानान् । त एनमुभये
5 देवाः प्रीताः सुधायां दधति ॥६॥

---

LXX. ÇATAPATHA BRAHMANA II. 2. 2.

तस्य वा एतस्याग्न्याधेयस्य सत्यमेवोपचारः । स यः सत्यं वदति यथाग्निं समिद्धं तं घृतेनाभिषिञ्चेदेवं हैनं स उद्दीपयति तस्य भूयो भूय एव तेजो भवति श्वः श्वः श्रेयान्भवति। अथ यो ऽनृतं वदति यथाग्निं समिद्धं तमुदकेनाभिषिञ्चेदेवं हैनं स जा-
10 सयति तस्य कनीयः कनीय एव तेजो भवति श्वः श्वः पापीयान्भवति । तस्मादु सत्यमेव वदेत् ॥१९॥ तदु हाप्यरुणमौपवेशिं ज्ञातय ऊचुः स्थविरो वा असि अग्नी आ धत्स्वेति । स होवाच ते मैतद्ब्रूथ वाचंयम एवैधि न वा आहिताग्निनानृतं वदितव्यं न वदञ्जातु नानृतं वदेत्तावत्सत्यमेवोपचार इति॥२०॥

---

LXXI. ÇATAPATHA BRAHMANA X. 4. 3.

15 एष वै मृत्युर्यत्संवत्सरः । एष हि मर्त्यानामहोरात्राभ्यामायुः क्षिणोति । अथ म्रियन्ते । तस्मादेष एव मृत्युः । स यो हैतं मृत्युं संवत्सरं वेद न हास्यैष पुरा जरसो ऽहोरात्राभ्यामायुः क्षिणोति । सर्वं हैवायुरेति ॥१॥ एष उ एवान्तकः । एष हि मर्त्यानामहोरात्राभ्यामायुषो ऽन्तं गच्छति । अथ म्रियन्ते।

तस्मादेष एवान्तकः। स यो हैतमन्तकं मृत्युं संवत्सरं वेद न
हास्यैष पुरा जरसो ऽहोरात्राभ्यामायुषो ऽन्तं गच्छति। सर्वं
हैवायुरेति ॥२॥ ते देवा एतस्मादन्तकान्मृत्योः संवत्सरात्प्रजा-
पतेर्बिभयां चक्रुर्यद्वै नो ऽयमहोरात्राभ्यामायुषो ऽन्तं न ग-
5 च्छेदिति ॥३॥ त एतान्यज्ञक्रतूंस्तेनिरे ऽग्निहोत्रं दर्शपूर्णमा-
सौ चातुर्मास्यानि पशुबन्धं सौम्यमध्वरम्। त एतैर्यज्ञक्रतुभि-
र्यजमाना नामृतत्वमानशिरे ॥४॥ ते हाप्यग्निं चिक्यिरे। ते
ऽपरिमिता एव परिश्रित उप दधुरपरिमिता यजुष्मतीरपरि-
मिता लोकंपृणा यथेदमप्येतर्ह्येक उपदधति। इति देवा अ-
10 कुर्वन्। इति ते ह नैवामृतत्वमानशिरे ॥५॥ ते ऽर्चन्तः श्रा-
म्यन्तश्चेरुरमृतत्वमवरुरुत्समानाः। तान्ह प्रजापतिरुवाच न
वै मे सर्वाणि रूपाण्युप धत्थाति वैव रेचयथ न वाभ्यापयथ
तस्मान्नामृता भवथेति ॥६॥ ते होचुस्तेभ्यो वै नस्त्वमेव त-
द्ब्रूहि यथा ते सर्वाणि रूपाण्युपदधामेति ॥७॥ स होवाच
15 षष्टिं च त्रीणि च शतानि परिश्रित उप धत्त षष्टिं च त्रीणि
च शतानि यजुष्मतीरधि षट्त्रिंशतमथ लोकंपृणा दश च स-
हस्राण्यष्टौ च शतान्युप धत्ताथ मे सर्वाणि रूपाण्युप धास्य-
थाथामृता भविष्यथेति। ते ह तथा देवा उप दधुः। ततो दे-
वा अमृता आसुः ॥८॥ स मृत्युर्देवानब्रवीदित्थमेव सर्वे मनु-
20 ष्या अमृता भविष्यन्त्यथ को मह्यं भागो भविष्यतीति। ते हो-
चुर्नातो ऽपरः कश्चन सह शरीरेणामृतो ऽसद्यदैव त्वमेतं भागं
हरासा अथ व्यावृत्य शरीरेणामृतो ऽसद्यो ऽमृतो ऽसद्विद्यया
वा कर्मणा वेति। यद्वै तदब्रुवन्विद्यया वा कर्मणा वेत्येषा

हैव सा विद्या यदग्निरेतदु हैव तत्कर्म यदग्निः ॥९॥ ते य ए-
वमेतद्विदुर्ये वैतत्कर्म कुर्वते मृत्वा पुनः सं भवन्ति । ते संभ-
वन्त एवामृतत्वमभिसं भवन्ति । अथ य एवं न विदुर्ये वैत-
त्कर्म न कुर्वते मृत्वा पुनः सं भवन्ति त एतस्यैवान्नं पुनः पु-
5 नर्भवन्ति ॥१०॥

---

## LXXII. ÇATAPATHA BRAHMANA XII. 7. 3.

इन्द्रस्येन्द्रियमन्नस्य रसं सोमस्य भक्षं सुरयासुरो नमुचिरह-
रत् । सो ऽश्विनौ च सरस्वतीं चोपाधावच्छेपानो ऽस्मि न-
मुचये न त्वा दिवा न नक्तं हनानि न दण्डेन न धन्वना न पृ-
थेन न मुष्टिना न शुष्केण नार्द्रेणाथ म इदमहार्षीदिदं म
10 आ जिहीर्षथेति । ते ऽब्रुवन्नस्तु नो ऽत्राप्यथा हरामेति । सह
न एतदथा हरतेत्यब्रवीत् । इति तावश्विनौ च सरस्वती च
अपां फेनं वज्रमसिञ्चन्न शुष्को नार्द्र इति । तेनेन्द्रो नमुचे-
रासुरस्य व्युष्टायां रात्रावनुदित आदित्ये न दिवा न नक्तमि-
ति शिर उदवासयत् । तस्मादेतदृषिणाभ्यनूक्तमपां फेनेनेति ।

---

## LXXIII. NIRUKTA II. 16.

15 अतिष्ठन्तीनामनिविशमानानामित्यस्थावराणां काष्ठानां
मध्ये निहितं शरीरं मेघः । शरीरं शृणातेः शम्नातेर्वा । वृत्रस्य
निण्यं निर्णामं विचरन्ति विजानन्त्याप इति । दीर्घं द्राघतेः ।
तमस्तनोतेः । आशयदाशेतेः । इन्द्रशत्रुरिन्द्रो ऽस्य शमयिता वा
शातयिता वा तस्मादिन्द्रशत्रुः । तत्को वृत्रः । मेघ इति नैरु-

क्ताः । त्वाष्ट्रो ऽसुर इत्यैतिहासिकाः । अपां च ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते । तत्रोपमार्थेन युद्धवर्णा भवन्ति । अहिवत्तु खलु मन्त्रवर्णा ब्राह्मणवादाश्च । विवृद्ध्या शरीरस्य स्रोतांसि निवारयां चकार । तस्मिन्हते प्रसस्यन्दिर
5 आपः । तदभिवादिन्येषर्ग्भवति ।

---

LXXIV. AÇVALAYANA'S GRIHYASUTRA I. 5, 7, 8.

कुलमग्रे परीक्षेत ये मातृतः पितृतश्चेति यथोक्तं पुरस्तात्।१। बुद्धिमते कन्यां प्रयच्छेत्।२।बुद्धिरूपशीललक्षणसंपन्नामरोगा- मुपयच्छेत ।३। दुर्विज्ञेयानि लक्षणान्यष्टौ पिण्डान्कृत्व ऋृतमग्रे प्रथमं जज्ञ ऋृते सत्यं प्रतिष्ठितम् । यदियं कुमार्यभिजाता
10 तदियमिह प्रतिपद्यताम् । यत्सत्यं तद्दृश्यतामिति पिण्डान- भिमन्त्र्य कुमारीं ब्रूयादेषामेकं गृहाणेति ।४। क्षेत्राच्चेदुभयतः- सस्याद्गृह्णीयादन्नवत्यस्याः प्रजा भविष्यतीति विद्याद्गोष्ठात्प- शुमती वेदिपुरीषाद्ब्रह्मवर्चस्विन्यविदासिनो ह्रदात्सर्वसंपन्ना- देवनात्कितवी चतुष्पथाद्द्विप्रव्राजिनीरिणादधन्या श्मशाना-
15 त्पतिघ्नी ।५। ॥५॥

अथ खलूच्चावचा जनपदधर्मा ग्रामधर्माश्च तान्विवाहे प्र- तीयात् ।१। यत्तु समानं तद्वक्ष्यामः ।२। पश्चादग्नेर्दृषदमश्मानं प्रतिष्ठाप्योत्तरपुरस्तादुदकुम्भं समन्वारब्धायां हुत्वा तिष्ठन्प्रत्य- ङ्मुखः प्राङ्मुख्या आसीनाया गृभ्णामि ते सौभगत्वाय हस्त-
20 मित्यङ्गुष्ठमेव गृह्णीयाद्यदि कामयीत पुमांस एव मे पुत्रा जायेरन्निति ।३। अङ्गुलीरेव स्त्रीकामः ।४। रोमान्ते हस्तं साङ्गुष्ठ-

मुभयकामः ।५। प्रदक्षिणमग्निमुदकुम्भं च त्रिः परिणयं जपति

अमो ऽहमस्मि सा त्वं सा त्वमस्यमो ऽहम् ।
द्यौरहं पृथिवी त्वं सामाहमृक्त्वम् ॥
तावेहि विवहावहै प्रजां प्रजनयावहै ।
5 संप्रियौ रोचिष्णू सुमनस्यमानौ जीवेव शरदः शतम् ॥

इति ।६। परिणीय परिणीयाश्मानमारोहयति

इममश्मानमारोहाश्मेव त्वं स्थिरा भव ।
सहस्व पृतनायतो ऽभितिष्ठ पृतन्यतः ॥

इति ।७। वध्वञ्जला उपस्तीर्य भ्राता भ्रातृस्थानो वा द्विर्ला-
10 जानावपति ।८। त्रिर्जामदग्न्यानाम् ।९। प्रत्यभिघार्य हविः ।१०।
अवत्तं च ।११। एषो ऽवदानधर्मः ।१२।

अर्यमणं नु देवं कन्या अग्निमयक्षत ।
स इमां देवो अर्यमा प्रेतो मुञ्चातु नामुतः स्वाहा ॥
वरुणं नु देवं कन्या अग्निमयक्षत ।
15 स इमां देवो वरुणः प्रेतो मुञ्चातु नामुतः स्वाहा ॥
पूषणं नु देवं कन्या अग्निमयक्षत ।
स इमां देवः पूषा प्रेतो मुञ्चातु नामुतः स्वाहा ॥

इत्यविच्छिन्दत्यञ्जलिं स्रुचेव जुहुयात् ।१३। अपरिणीय शूर्प-
पुटेनाभ्यात्मं तूष्णीं चतुर्थम् ।१४। ओप्योप्य हैके लाजान्परिण-
20 यन्ति तथोत्तमे आहुती न संनिपततः ।१५। अथास्यै शिखे वि-
मुञ्चति यदि कृते भवत ऊर्णास्तुके केशपक्षयोर्बद्धे भवतः ।१६।
प्र त्वा मुञ्चामि वरुणस्य पाशादिति ।१७। उत्तरामुत्तरया ।१८।
अथैनामपराजितायां दिशि सप्त पदान्यभ्युत्क्रामयति

इष एकपदी ऊर्जे द्विपदी
रायस्पोषाय त्रिपदी मायोभव्याय चतुष्पदी
प्रजाभ्यः पञ्चपदी ऋतुभ्यः षट्पदी
सखा सप्तपदी भव सा मामनुव्रता भव ।
5 पुत्रान्विन्दावहै बहूंस्ते सन्तु जरदष्टयः ॥

इति ।१९। उभयोः संनिधाय शिरसी उदकुम्भेनावसिच्य ।२०। ब्राह्मण्याश्च वृद्धाया जीवपत्न्या जीवप्रजाया अगार एतां रात्रीं वसेत् ।२१। ध्रुवमरुन्धतीं सप्त ऋषीनिति दृष्ट्वा वाचं विसृजेत जीवपत्नी प्रजां विन्देयेति ।२२। ॥७॥

10 प्रयाण उपपद्यमाने पूषा त्वेतो नयतु हस्तगृह्येति यानमारोहयेत् ।१। अश्मन्वती रीयते सं रभध्वमित्यर्धर्चेन नावमारोहयेत् ।२। उत्तरेणोत्क्रमयेत् ।३। जीवं रुदन्तीति रुदत्याम् ।४। विवाहाग्निमग्रतो ऽजस्रं नयन्ति ।५। कल्याणेषु देशवृक्षचतुष्पथेषु मा विदन्परिपन्थिन इति जपेत् ।६। वासे वासे 15 सुमङ्गलीरियं वधूरितीक्षकानीक्षेत ।७। इह प्रियं प्रजया ते समृध्यतामिति गृहं प्रवेशयेत् ।८। विवाहाग्निमुपसमाधाय पश्चादस्यानडुहं चर्मास्तीर्य प्राग्ग्रीवमुत्तरलोम तस्मिन्नुपविष्टायां समन्वारब्धायामा नः प्रजां जनयतु प्रजापतिरिति चतसृभिः प्रत्यृचं हुत्वा समञ्जन्तु विश्वे देवा इति दध्नः प्राश्य 20 प्रतिप्रयच्छेदाज्यशेषेण वानक्ति हृदये ।९। अत ऊर्ध्वमक्षारालवणाशिनौ ब्रह्मचारिणावलंकुर्वाणावधःशायिनौ स्यातां त्रिरात्रं द्वादशरात्रम् ।१०। संवत्सरं वैक ऋषिर्जायत इति ।११।

